आहवनीयागारे यजमानो विहरति गार्हपत्यागारे पत्नी तयोर्दक्षिणा ॥ ११ ॥ प्रत्यगाशिषोऽकर्मयुक्ता मन्त्रा याजमानम् ॥१२॥ दक्षिणत उपचारो यजमानस्यापरतः पत्न्याः ॥ १३ ॥ आमन्त्रिते प्रणवमुक्त्वा यथार्थमनुज्ञानम् ॥ १४ ॥ यथादेवतमाहुतिमनुमन्त्रयते[1] यथाकर्मसँयोग-मारात् ॥ १५ ॥ को वः प्रणयति इति प्रणीताः[2] प्रणीयमानाः ॥१६॥ भूश्च कश्च वाक् च ऋक् च गौश्च वट् च खं च धूश्च नीश्च पूश्चैका-क्षराः पूर्दशमा विराजो या इदँ विश्वं भुवनँ व्यानशुस्ता नो देवीस्तरसा सँविदानाः स्वस्ति यज्ञं नयत प्रजानतीर्ब्रह्मपूताः[3] स्थ इति सादने च ॥ १७ ॥ अग्निँ होतारम् इति हविर्निर्वपणमभिमृशेन्निरुप्यमाणे वा जपेत् ॥ १८ ॥ पुरस्तात् स्तम्बयजुषोऽन्तर्वेद्युपविश्य

अयँ वेदः पृथिवीमन्वविन्दद्गुहाहितां निहितां गह्वरेषु ।
स मह्यं लोकँ यजमानाय विन्दत्वच्छिद्रँ यज्ञं भूरिरेताः कृणोतु ॥

इति वेदमादत्ते ॥ १९ ॥

वेदेन वेदिँ विविदुः पृथिव्याः सा पप्रथे पृथिवी पार्थिवानि ।
गर्भँ बिभर्ति भुवनेष्वन्तस्ततो यज्ञस्तायते विश्वदानीम् ॥

इति त्रिर्वेदेन वेदिमभिमार्ष्टि ॥ २० ॥ उभयत्राज्यावेक्षणम् ॥२१॥ पञ्चानां त्वा वातानाम् इत्यान्तादनुवाकस्याज्यग्रहान् ॥ २२ ॥ युनज्मि त्वा इति च परिधिषु परिधीयमानेष्वाहवनीयम् ॥२३॥ ध्रुवा-करणमुभयत्र ॥२४॥ ममाग्ने वर्चः इत्यष्टाभिर्वैहवीभिर्हवीँष्यासन्नान्यभि-मृशेत् ॥ २५ ॥ चतुर्होत्रा च पौर्णमास्यां प्रजाकामः पञ्चहोत्रा चामा-वास्यायाँ स्वर्गकामः ॥ २६ ॥ चित्तिः स्रुक् इति दशहोतारं पुरस्तात् सामिधेनीनाम् ॥ २७ ॥ अङ्गिरसो मास्य यज्ञस्य प्रातरनुवाकैरवन्तु । समिद्धो अग्निराहुतः स्वाहाकृतः पिपर्तु नः इति समिद्धम् ॥ २८ ॥

---

१. N °मंत्रयेत

२. Thus B, N; CR omit

३. CR reads sūtra 17 as two sūtras the first ending with प्रजानती [ रिति ]

मनोऽसि प्राजापत्यं मनसा मा भूतेनाविश इति **स्रुवाघारम्** ॥ २९ ॥ वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाविश इति **स्रौचम्** ॥ ३० ॥ देवाः पितरः इति **प्रवरे प्रवर्यमाणे** ॥ ३१ ॥ पृथिवी होता इति **चतुर्होतारं पुरस्तात् प्रयाजानाम्** ॥ ३२ ॥

**॥ इतीष्टिसूत्रे द्वितीयं खण्डम् ॥**

वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु ।
वसन्तस्याहं देवयज्यया तेजस्वान् पयस्वान् भूयासम् ॥
ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु ।
ग्रीष्मस्याहं देवयज्ययेन्द्रियवान् वीर्यवान् भूयासम् ॥
वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु ।
वर्षाणामहं देवयज्यया पुष्टिमान् पशुमान् भूयासम् ॥
शरदमृतूनां[1] प्रीणामि सा मा प्रीता प्रीणातु ।
शरदोऽहं देवयज्ययान्नवान् वर्चस्वान् भूयासम् ॥
हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीताम् ।
हेमन्तशिशिरयोरहं देवयज्यया सहस्वाँस्तपस्वान् भूयासम् ॥

**इति प्रयाजान्** ॥ १ ॥ अग्निना यज्ञश्चक्षुष्मानग्नेरहं देवयज्यया चक्षुषा चक्षुष्मान् भूयासम् ॥ सोमेन यज्ञश्चक्षुष्मान् सोमस्याहं देवयज्यया चक्षुषा चक्षुष्मान् भूयासम् **इत्याज्यभागौ** ॥ २ ॥ अग्निर्होता इति **पञ्चहोतारं पुरस्ताद्धविषाम्** ॥ ३ ॥

अग्निरन्नादोऽग्नेरहं देवयज्ययान्नादो भूयासम् ॥
दब्धिर्नामास्यदब्धोऽहं भ्रातृव्यं दभेयम् ॥ **इत्युपाँशुयाजौ** ॥ ४ ॥
अग्नीषोमौ वृत्रहणा अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम् ॥
इन्द्राग्न्योरहं देवयज्ययेन्द्रियवानन्नादो भूयासम् ॥
इन्द्रस्याहं देवयज्ययेन्द्रियवान् भूयासम् ॥
महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयम् ॥

---

१. Thus B, N; CR शरदृतूनां

इत्यौत्तरतनिकानप्यनुमन्त्रणानधीयेत[1] ॥ ५ ॥

इन्द्रस्य वैमृधस्याहं देवयज्ययासपत्नो भूयासम् ॥
इन्द्रस्य त्रातुरहं देवयज्यया त्रातो[2] भूयासम् ॥
पूष्णोऽहं देवयज्यया पुष्टिमान् पशुमान् भूयासम् ॥
सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं गमेयम् ॥
अदितेरहं देवयज्यया प्र प्रजया प्र[3] पशुभिर्जनिषीय ॥
विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयम् ॥
द्यावापृथिव्योरहं देवयज्यया प्रजनिषीय प्रजया पशुभिः ॥

अमुष्याहं देवयज्यया इत्यनाम्नातेऽभ्यूहेत् ॥ ६ ॥ अग्निः स्विष्टकृद्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयम् इत्यग्निँ स्विष्टकृतम् ॥ ७ ॥ अग्निर्मा दुरिष्टात् पातु सविताघशँसाद्यो नो अन्ति शपति तमेतेन जेषम् इति प्राशित्रमवदीयमानम् ॥ ८ ॥ इडायास्तूष्णीमुपहवे[4] वसीयस्येहि इति ॥ ९ ॥ चिदसि इत्युच्चैरुपहवे[5] घृतेन मा समुक्षत इत्यन्तम् । अस्मास्विन्द्र इति च ॥१०॥ आमाशिषः इति नामग्राहे ॥ ११ ॥

इडा धेनुः सहवत्सा न आगादूर्जं दुहाना पयसा प्रपीना ।
सा नो अन्नेन हविषोत गोभिरिडा पिन्वतां पयसाभ्यस्मान् ॥

इतीडामार्जने ॥ १२ ॥ ब्रध्न पाहि इति बर्हिषि हवीँष्यासन्नान्यभिमृशेत् ॥ १३ ॥ आग्नेयं चतुर्धा व्युद्दिशेत् इदमग्नीधः, इदं ब्रह्मणः, इदँ होतुः, इदमध्वर्योः[6] । इदँ यजमानस्य इति यजमानभागम् ॥ १४ ॥ दिशां क्लृप्तिरसि दिशः प्रीणामि दिशो मा प्रीता अवन्तु इति व्युद्दिष्टे

१. Thus N; B °मंत्रणन°; CR °मन्त्रान°
२. Emended. cf. ĀpŚS IV. 16.1. B, N, CR त्राता
३. Thus B, N; CR omit.
४. CR ends sūtra 9 with इडायास्तूष्णीम्. MānŚS 1. 4. 3. 9–10 is also wrongly separated cf. BhārŚS IV. 14. 2–3
५. Thus B, N; CR इत्युच्चैः
६. CR adds [ इति ]

दक्षिणां ददाति ॥ १५ ॥ दक्षिणाग्नौ यजमानो महान्तमोदनं[1] पक्त्वा दक्षिणस्याँ वेदिश्रोण्यामासाद्याभिमृशेत्

इयँ स्थाल्यमृतस्य पूर्णा सहस्रधार उत्सो अक्षीयमाणः ।
अनेनौदनेनाति मृत्युं तराम्यहम् ॥

प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् । अक्षितोऽस्यक्षित्यै त्वा । अक्षितो नामासि मा मे क्षेष्ठा आ मा गम्याः ॥ प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानरूपे मे पाहि चक्षुःश्रोत्रे मे पाहि ऊर्गस्यूर्जं मयि धेहि ॥ प्रजापतिरहं त्वया साक्षादृध्यासम् इति ॥ १६ ॥ अग्रेणोत्करमुदञ्चमुद्वास्य[2] दक्षिणतःसद्भय ऋत्विग्भ्यः परिहृत्यादध्यात्[3] ॥ १७ ॥ सं मे संनतयः संनमन्तामिध्मसंनहने हुते इति संमार्गानाहितान् ॥ १८ ॥ महाहविर्होता इति सप्तहोतारं पुरस्तादनुयाजानाम् ॥ १९ ॥

इतीष्टिसूत्रे तृतीयं खण्डम् ॥

बर्हिषोऽहं देवयज्यया प्रजावान् भूयासम् ॥
नराशँसस्याहं देवयज्यया वीर्यवान् भूयासम् ॥

अग्निः स्विष्टकृद्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयम् ॥ इत्यनुयाजान् ॥ १ ॥ वाजवत्या उभयत्र ॥ २ ॥ सा मे सत्याशीः इति प्रस्तरे प्रहियमाणे ॥ ३ ॥ वस्विहागछतु इति वरँ वृणीते ॥ ४ ॥ वि ते मुञ्चामि इति परिधिषु प्रहियमाणेष्वाहवनीयम् ॥ ५ ॥ इष्टो यज्ञो भृगुभिः इति सँस्रावभागान् ॥ ६ ॥ अदो मागछतु इति द्वितीयँ वरम् । अदो मागम्यात् इति तृतीयम् ॥ ७ ॥ स्रुचोर्विमोचनमुभयत्र ॥ ८ ॥ पत्नी च पत्नीसँयाजाननुमन्त्रयते

सोमस्याहं देवयज्यया विश्वँ रेतो धेषीय ॥
त्वष्टुरहं देवयज्यया सर्वाणि रूपाणि पशूनां पुषेयम् ॥

१. CR मन्त्रान्त° probably a printing mistake
२. Thus B, N; CR अग्रेणोत्तर° probably a printing mistake
३. CR suggested परिहृत्य दद्यात्

देवानां[1] पत्नीर्यज्ञस्य मिथुनं तासामहं देवयज्यया मिथुनेन प्रभूयासम् ॥
राकाया अहं देवयज्यया वीरान् विन्देयम्[2] ॥
सिनीवाल्या अहं देवयज्यया पशून् विन्देयम्[2] ॥
कुह्वा अहं देवयज्यया प्रतिष्ठां गमेयम् ॥
अग्निर्गृहपतिर्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया यज्ञेन गृहैः प्रतिष्ठां गमेयम् ॥

**इत्यग्निं गृहपतिम्** ॥ ९ ॥

इडास्मं अनुवस्तां घृतेन यस्याः पदे पुनते देवयन्तः ।
वैश्वानरी शक्वरी वावृधानोप यज्ञमस्थित वैश्वदेवी ॥

**इतीडाम्** ॥ १० ॥ **दक्षिणाग्निका होमा उभयत्र** ॥ ११ ॥ या सरस्वती वेशभगीना **इति मुखँ विमृष्टे** ॥ १२ ॥ **प्रायश्चित्ताहुतयः समिष्टयजुः कपालानाँ विमोचनं प्रणीतानाँ विमोचनमुभयत्र** ॥ १३ ॥ सँ यज्ञपतिराशिषा **इति यजमानो यजमानभागं प्राश्नाति** ॥ १४ ॥ **यदि प्रवसेत् समिष्टयजुषा सह जुहुयात्** प्रजापतेर्विभान्नाम लोकस्तस्मिँस्त्वा[3] दधानि सह यजमानेन **इति** ॥ १५ ॥ **सांनाय्यस्य प्राश्नीयात् । नाब्राह्मणः** ॥१६॥ इदँ हविः **इति शृतस्य** ॥१७॥ दधिक्राव्णो अकार्षम्[4] **इति दध्नः** ॥ १८ ॥ **अन्तर्वेदि प्रणीतास्ववमृज्य मार्जयन्त ऋत्विजो यजमानश्च** ॥ १९ ॥ **आसिच्यमान उदकेऽविछिन्ने** सदसि **इत्यभिमन्त्र्य दिङ्मन्त्रैः प्रतिदिशँ व्युत्सिच्य**

यदप्सु ते सरस्वति गोष्वश्वेषु यद्वसु ।
तेन मे वाजिनीवति मुखमङ्धि सरस्वति वर्चसा ॥

---

१. Thus B, N; CR देवानां पत्नीनामहं देवयज्यया
२. Thus B, N; CR विदेयम्
३. Thus B, N; CR °स्तस्मै त्वा
४. Thus B, N; अकारिषम् Schroder's edition of MS ( I. 5. 1; 5.6; III. 13. 1; IV. 11.1 ) reads *akāriṣam*, but some of his mss have *akārṣam*.

**इति मुखानि विमृजते ॥ २० ॥**

समुद्रँ वः प्रहिणोमि स्वाँ योनिमभिगछत ।

अरिष्टा अस्माकँ वीरा मा परासेचि मत्पयो मा मा हिँसीस्त्वं धनम् ॥ **इति प्रणीताशेषं निनीय ॥ २१ ॥**

नमः कृताय कर्मणे अकृताय कर्मणे नमः ॥

अयाड् यज्ञं जातवेदा अन्तरः पूर्वोऽस्मिन्निषद्य ।

स त्वँ सनिँ सुविमुचा विमुञ्च धेह्यस्मासु द्रविणं जातवेदः ॥

**इति[1] दक्षिणत आहवनीयमुपस्थाय** विष्णुः पृथिव्याँ व्यक्रँस्त **इति पर्यायै-र्यजमानस्त्रीन् विष्णुक्रमान्[2] क्रामति ।** विष्णुर्दिक्षु व्यक्रँस्तानुष्टुभेन छन्दसा **इति चतुर्थम् ॥ २२ ॥** स्वयंभूरसि **इत्यादित्यमुपस्थाय प्रत्यपक्रामति**

इदमहमाभ्यो दिग्भ्योऽस्मादन्नाद्याद् भ्रातृव्यं निर्भजामि निर्भक्तो यं द्विष्मः ॥

[ इदमहमस्या दिवोऽस्मादन्नाद्याद् भ्रातृव्यं निर्भजामि निर्भक्तो यं द्विष्मः ॥ ]

इदमहमस्मादन्तरिक्षादस्मादन्नाद्याद् भ्रातृव्यं निर्भजामि निर्भक्तो यं द्विष्मः ॥

इदमहमस्याः पृथिव्या अस्मादन्नाद्याद् भ्रातृव्यं निर्भजामि निर्भक्तो यं द्विष्मः ॥

**इति ॥ २३ ॥** अगन्म स्वः सं ज्योतिषाभूम **इत्याहवनीयमुपस्थाय** इदमहममुष्य प्राणं निवेष्टयामि इति **पाष्ण्याभिदक्षिणं निवेष्टयति ॥ २४ ॥** यो अस्मान् द्वेष्टि यं च वयं द्विष्मः **इत्यभिचरन् ॥ २५ ॥** तेजोऽसि **इत्याहवनीयम् ॥ २६ ॥** अग्ना आयूँषि पवसा **इति तिसृभिर्गार्हपत्यम् ।** अग्ने गृहपते **इति च ॥ २७ ॥** असा अनु मा तनु **इति नामग्राहं पुत्रानन्वायातयते[3] ॥ २८ ॥** ज्योतिषे तन्तवे त्वा

१. Here ends sūtra 21 of CR.

२. added by conjecture

३. Thus emended. B, N, CR °न्वातयते

इत्यन्तर्वेद्युपविश्य ये देवा यज्ञहनः इति यजमानस्त्रीनतिमोक्षाञ्जपति ॥ २९ ॥ वेदोऽसि इति वेदमादत्ते ॥ ३० ॥ घृतवन्तं कुलायिनम् इति स्तृणाति संततं गार्हपत्यादध्याहवनीयात् ॥ ३१ ॥ गोमं अग्ने इति प्राङ् प्रक्रम्य जपति ॥ ३२ ॥ अग्ने व्रतपते व्रतमचार्षं[1] तत्ते प्रावोचं तदशकं तेनाशकं तेनारात्सम् इत्याहवनीयम् ॥ ३३ ॥ सम्राडसि व्रतपा असि व्रतपतिरसि व्रतमचार्षं तत्ते प्रावोचं तदशकं तेनाशकं तेनारात्सम् इत्यादित्यम् ॥ ३४ ॥

यज्ञो बभूव स उ वावभूव स प्रजज्ञे स उ वावृधे पुनः ।
स प्रजानामधिपतिर्बभूव सो अस्मासु द्रविणमादधातु
वयँ स्याम पतयो रयीणाम् ॥

इति जपित्वा सर्वेषु समिध आधाय तेन धर्मेण पर्युक्षति ॥ ३५ ॥

इतीष्टिसूत्रे चतुर्थं खण्डम् ॥

तन्त्रादिषु ब्रह्मिष्ठं ब्रह्माणँ वृणीते भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणे इति ॥ १ ॥ वृतो जपति देव सवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो वाचे वाग्गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुप् पङ्क्तये पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यः ॥ बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणां बृहस्पते यज्ञं गोपायाहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिः ॥ महो मेऽवोचो यशो मेऽवोचो भर्गो मेऽवोचः स्तोमं मेऽवोचोऽन्नाद्यं मेऽवोचः प्रजां मेऽवोचः प्रतिष्ठां मेऽवोचः इति ॥ २ ॥ दक्षिणतः कर्माण्यनुतिष्ठेत् ॥३॥ ब्रह्मौदनस्य[2] प्राशिष्यन्नोदनस्यादायौदनेन जुहोति ओदनौदनस्य

---

१. Thus B, N; CR व्रतमचारिषम्. MS and MānŚS read *acāriṣam* but some of the mss have got *acārṣam.* Even the printed text of MānŚS elsewhere ( VII. 2.7.12 ) twice reads *acārṣuḥ.*

२. Thus B, N; CR ब्राह्मौदनस्य

त्वासञ्जुहोमि[1] स्वाहा इति ॥ ४ ॥ अग्नेऽङ्गिरोऽहुताद्यान्मा पाहि सुत्रामणिस्त्वादधानि इति प्राश्नाति ॥५॥ **दर्शपूर्णमासयोः परिस्तीर्णे विहारे तीर्थेन प्रपद्य दक्षिणत आहवनीयस्य सँस्तीर्णमभिमन्त्रयते** अहे दैध्रिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतरः इति ॥६॥ **सव्येनासनात्तृणं[2] प्रछिद्य प्रत्यग्दक्षिणा निरस्यति** निरस्तः परावसुः सह पाप्मना इति ॥ ७ ॥ इदमहमर्वाग्वसोः सदने सीदामि देवेन सवित्रा प्रसूतः **इत्यपः स्पृष्ट्वोपविशति** ॥ ८ ॥ अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिः ॥ तदग्नये प्रब्रवीमि तद्वायवे तत्सूर्याय ॥ सूर्यो दिवो यज्ञं पातु वायुरन्तरिक्षाद्यज्ञपतिं पात्वग्निर्मां पातु मानुषम् इति **जपति** ॥ ९ ॥ **आमन्त्रितोऽपः प्रणेष्यन्तमनुजानाति** भूर्भुवः स्वः प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे स्वर्गे लोके यजमानोऽस्तु । सप्तऋषीणां सुकृतां यत्र लोकस्तत्रेमँ यज्ञँ यजमानं[3] च[3] धेहि ॥ देवस्य सवितुः प्रसवे बृहस्पति-प्रसूतः ॥ ओं प्रणय इति ॥ १० ॥ **अनामन्त्रितो हविः प्रोक्षिष्यन्त-मनुजानात्यामन्त्रित उत्तरान् परिग्राहानिध्माबर्हिश्चानामन्त्रितः सामिधेनीप्रवरौ चामन्त्रित आश्रावणाय समिधे च** प्रोक्ष यज्ञम्, बृहस्पते परिगृहाण वेदिम्, प्रोक्ष यज्ञम्, प्रजापतेऽनुब्रूहि यज्ञम्, प्रवृणीष्व यज्ञम्, वाचस्पते वाचमाश्रावयैतामाश्रावय यज्ञम्, देवेभ्यः प्रजापते प्रतिष्ठ यज्ञम् **इति यथारूपम्** ॥ ११ ॥ देवता वर्धय त्वम् **इत्यनुषजेत्** ॥ १२ ॥ **व्याहृतीः पुरस्तात् प्रणवं चोपरिष्टात्** ॥ १३ ॥ **अनूच्यमानासु सामिधेनीषु वाचँ यच्छेत् प्रयाजानुयाजेष्विज्यमानेषु प्रधानेषु च परिहृते प्राशित्र आ प्रस्थानात्** ॥ १४ ॥ **यदि वाचँ विसृजेत्** इदँ विष्णुः, अग्नाविष्णू, पावका नः सरस्वती, बृहस्पतिँ हवामहे **इति निगद्य वाचँ यच्छति** ॥ १५॥ **मार्जितेऽग्रेणाहवनीयं प्राशित्रमाह्रियमाणं प्रतीक्षते** मित्रस्य त्वा चक्षुषा प्रतीक्षे इति ॥ १६ ॥ **प्रतीक्ष्य सावित्रेण प्रतिगृह्य**

१. CR त्वा संजुहोमि
२. Thus B, N; CR सव्येन तृणं
३. Thus emended; B यजमानं; N, CR यजमानाय

अदित्यास्त्वा पृष्ठे सादयामि इति भूमौ प्रतिष्ठाप्य सुपर्णस्य त्वा गरुत्मतश्चक्षुषावेक्षे इत्यवेक्ष्याङ्गुष्ठेनोपमध्यमया च प्राश्नात्यनुपस्पृशन् दन्तान् अग्नेष्ट्वास्येन प्राश्नामि इति । ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणा इति ॥ १७ ॥ प्राचीरप उत्सिच्याचामति ॥१८॥[1] सत्येन त्वाभिजिघर्मि इति हृदयदेशमभिमृशति । इन्द्रस्य त्वा जठरे दधामि इति नाभिदेशम् । वाङ्म आसन् नसोः प्राणोऽक्ष्योश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजोऽरिष्टा विश्वाङ्गानि तनूर्मे तन्वा सह इति सर्वाणि गात्राणि ॥ १९ ॥ आहितामनुयाजसमिधमनुमन्त्रयते एषा ते अग्ने समित्तया त्वँ वर्धस्व चाप्यायस्व वर्धिषीमहि च वयमा च प्यासिषीमहि च स्वाहा इति ॥ २० ॥

॥ इतीष्टिसूत्रे पञ्चमं खण्डम् ॥

वासिष्ठः सोमे ब्रह्मा ॥ १ ॥ आसन्नेष्वग्नीषोमीय आज्येषु दक्षिणत आहवनीयस्यान्तर्वेदि मन्त्रोपवेशनं प्रातरनुवाककाले च ॥२॥ न धिष्ण्यान् व्यवेयात् ॥३॥ तीर्थेन प्रपद्य प्रायश्चित्ताहुतयः पवमानान्वारम्भणं धिष्ण्योपस्थानमिति क्रियेत ॥ ४ ॥ आमन्त्रिते स्तोत्रानुज्ञानम् भूर्भुवः स्वर्देवस्य सवितुः प्रसवे बृहस्पते स्तुत इति[2] ॥ ५ ॥ रश्मिना क्षयाय क्षयं जिन्व इत्युत्तर उत्तरश्च स्तोमभागः[3] ओं स्तुत इति[3] ॥ ६ ॥ ग्रहोपस्थानादि[4] कलशोपस्थानान्तं[4] कृत्वा सदः प्रविशत्यपरेण द्वारेण ॥ ७ ॥[5] पश्चार्धेन विहारस्य द्वार्ये संमृश्य यथापूर्वं

---

१. In CR sūtra 18 ends with नाभिदेशम्.

२. इति added by conjecture. CR reads the 5th sūtra and the 6th up to स्तोमभागः as one sūtra.

३. B, N स्तोमभागाँ सुतेति; CR स्तोमभागः ॥ ६ ॥ स्तुते

४. Thus B, N; CR ग्रहोपस्थानकलशोपस्थानान्तं

५. CR reads sūtras 7 and 8 as one sūtra.

उरुं नो लोकमनुनेषि विद्वान्त्स्वर्वविज्ज्योतिरभयँ स्वस्ति ।
ऋष्वा त इन्द्र स्थविरस्य बाहू उपस्थेयाम शरणा बृहन्ता ॥

इति प्रपद्य दक्षिणतो मैत्रावरुणधिष्ण्यस्य मन्त्रोपवेशनम् ॥ ८ ॥ पूर्वेण द्वारेण दक्षिणा यथेतं निष्क्रमणम् ॥९॥ विसमाप्ते सवनेऽपरेण ॥१०॥ सवनसँस्थासु यथाप्रसृप्तम् ॥११॥ स्तुतशस्त्रेष्वा वषट्काराद्वाचँ यच्छेत् ॥१२॥[1] उपाकृते प्रातरनुवाक उपाँश्वन्तर्यामियोर्होमाद्धोमात्[2] ॥१३॥

इतीष्टिसूत्रे षष्ठं[3] खण्डम्[3] ॥

॥ इति प्रथमोऽध्यायः[4] ॥

१. CR reads sutras 12 and 13 as one sūtra.

२. One expects ओपाँश्वन्त°.

३. N षष्ठमं खंडं संपूर्णम्

४. N प्रथमोध्यायः समाप्तः

ॐ

सर्वकामस्य दर्शपूर्णमासौ ॥ १ ॥ व्रतोपेते यजमाने

देवा गातुविदो गातुं यज्ञाय विन्दत ।

मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यताम् ॥

इति जपित्वा शाखामाहरति । शमीशाखां पलाशशाखाँ वा बहुपलाशामप्रतिशुष्काग्रां प्राचीमुदीचीँ वाहानाम् ॥ २ ॥ इषे त्वा इति छित्त्वा सुभूताय इति संनमति ॥ ३ ॥

इमां प्राचीमुदीचीमिषमूर्जमभिसँस्कृताम् ।

बहुपर्णामशुष्काग्राँ हरामि पशुपामहम् ॥

इत्याहरति ॥ ४ ॥ तया सदर्भपिञ्जलया षड् वत्सानपाकरोति वायवः स्थ इति ॥५॥ देवो वः इत्येकैकाँ सँस्पर्शयन् गाः प्रकालयति ॥ ६ ॥ आप्यायध्वमघ्न्या देवेभ्या इन्द्राय भागम् इत्याप्याययति । महेन्द्राय इति महेन्द्रयाजिनः ॥ ७ ॥

शुद्धा अपः सुप्रपाणे पिबन्तीः शतमिन्द्राय शरदो दुहानाः ।

रुद्रस्य हेतिः परि वो वृणक्तु ॥

इति व्रजन्तीरनुमन्त्रयते ॥ ८ ॥ पूषा वः परस्पा अदितिः प्रेत्वँरीपा इन्द्रो वोऽध्यक्षोऽनष्टाः पुनरेत इति च ॥ ९ ॥ ध्रुवा अस्मिन् इति यजमानं प्रेक्षते गृहान् वाभिपर्यावर्तते ॥१०॥ यजमानस्य पशून् पाहि इत्यग्निष्ठेऽनस्यग्न्यगारे वा पुरस्तात्प्रतीचीँ शाखामुपकर्षति ॥११॥ असिदं दात्रं पश्चाद्गार्हपत्यस्य सावित्रेणादत्तेऽश्वपरशुँ वा देवस्य त्वा इतिप्रभृतिना आददे इत्यन्तेन ॥ १२ ॥ गोषदसि इति गार्हपत्यं प्रेक्षते ॥ १३ ॥ प्रत्युष्टँ रक्षः इत्याहवनीये प्रतितप्य उर्वन्तरिक्षँ वीहि ॥ प्रेयमगात् इति प्राङ्[1] वोदङ्[1] वाभिप्रव्रज्य यतः कुतश्चिद्दर्भान् बर्हिरा-

---

१. Thus B, N; CR प्राग्वोदग्

हरति ॥ १४ ॥ देवानां परिषूतमसि इति परिषूय विष्णोः स्तुपः इति स्तम्बं गृहीत्वा अतिसृष्टो गवां भागः इत्येकां श्रुष्टिं द्वे वा विसृजति ॥ १५ ॥ देवेभ्यस्त्वोर्ध्वबर्हिर्भ्यः इत्यूर्ध्वमुन्मृज्य माधो मोपरि परुस्त ऋध्यासम् इति दात्रमुपहृत्य विशाखानि प्रति लुनाति सावित्रेण दामि इत्यन्तेन ॥१६॥ प्रथमलूनं संनखं प्रस्तरं कृत्वा पृथिव्याः संपृचः पाहि इति तृणमन्तर्धाय सादयति ॥ १७ ॥ आछेत्ता ते मार्षम्[1] इति प्रभूतं लूत्वा जपति ॥ १८ ॥ अतस्त्वं बर्हिः इत्यालवानभिमृशति ॥ १९ ॥ सहस्रवल्शा[2] इत्यात्मानं प्रत्यभिमृशति ॥ २० ॥ अपः स्पृष्ट्वा अयुपिता योनिः इति शुल्बं प्रतिधाय अदित्या रास्नासि इत्यावेष्टयति त्रिधातु पञ्चधातु सप्तधातु वा ॥ २१ ॥ एवं धातुसंभरणास्तरणयोः ॥ २२ ॥ सुसंभृता त्वा संभरामि इति शुल्बे बर्हिः संभरति ॥ २३ ॥ अलुभिता योनिः इति प्रस्तरमाधाय इन्द्राण्याः संनहनम् इत्यन्तावभिसमायच्छति ॥२४॥ पूषा ते ग्रन्थिं ग्रथ्नातु इति ग्रन्थिं करोति ॥२५॥ स ते मा स्थात् इति पश्चात्प्राञ्चमुपकर्षति ॥ २६ ॥

आपस्त्वामश्विनौ त्वामृषयः सप्त मामृजुः ।
बर्हिः सूर्यस्य रश्मिभिरुषसां केतुमारभे ॥

इत्यारभते[3] ॥ २७ ॥ इन्द्रस्य[3] त्वा बाहुभ्यामुद्यच्छे इत्युद्यच्छति ॥ २८ ॥ बृहस्पतेर्मूर्ध्ना हरामि इति शिरस्याधाय उर्वन्तरिक्षं वीहि इति व्रजति ॥ २९ ॥ अदित्यास्त्वा पृष्ठे सादयामि इति पश्चादाहवनीयस्य परिधिदेशेऽनधः सादयित्वा बर्हिरसि देवंगमम् इत्युपरि निदधाति ॥ ३० ॥ पालाशं खादिरं वाष्टादशदारुमिध्मं संनह्यति

१. Thus B, N; MS IV. 1.2; CR मा रिषम्.

२. Thus B, N; MS I. 1.2; IV. 1.2 (Aundh edn); CR सहस्रवल्शा.

३. Thus emended; B, N इत्यारभतींद्रस्य; CR इत्यारभ्येन्द्रस्य where sūtras 27 and 28 make one sūtra. cf. MānŚS I. 1.1.46–47.

त्रीँश्च परिधीन् सहशल्कान् कार्ष्मर्यमयान् बिल्वपलाशखदिररोहीत-कोदुम्बराणाँ वा ॥ ३१ ॥ स्थविष्ठो मध्यमो वर्षीयानणीयान् दक्षिणार्ध्यो ह्रसिष्ठोऽणिष्ठ उत्तरार्ध्यः ॥ ३२ ॥

यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन् ।
ततस्त्वामेकविँशतिधा संभरामि सुसंभृता ॥

इति संभृत्य यज्ञायुरनुसंचरान् इति सहमूलैर्दर्भैः संनह्यति ॥ ३३ ॥ कृष्णोऽस्याखरेष्ठाः ॥ देवपुरश्चरस ऋध्यासं त्वा इत्युपरि निदधाति ॥ ३४ ॥

॥ इतीष्टिसूत्रे द्वितीयेऽध्याये[1] प्रथमं खण्डम् ॥

दर्भाणाँ वेदं करोति । वत्सज्ञुं पशुकामस्य त्रिवृतं ब्रह्मवर्चसकामस्य मूतकार्यमन्नाद्यकामस्य ॥ १ ॥ प्रसव्यँ शुल्बं कृत्वा वत्सज्ञुं निवेष्टय वेदाग्रे शुल्बं प्रतिनिधाय[2] त्रिर्वेदशिरः संनहयत्युत्तरमुत्तरं प्रदक्षिणम् ॥ २ ॥ प्रादेशमात्रे शुल्बान् परिवास्योत्करे मूलानि गमयति ॥ ३ ॥ अत्रैवामावास्यायाँ वेदिं करोति । सर्वँ सद्यः पौर्णमास्याम् ॥ ४ ॥ शाखाया अन्तर्वेदि पलाशानि विशात्य मूलतः प्रछिद्यान्तर्वेदि न्यस्येदुपवेषं च कुर्वीत ॥ ५ ॥ शाखाया दर्भमयं पवित्रं करोत्यग्रन्थि त्रिवृद्विदलम् ॥ ६ ॥ हुतेऽग्निहोत्रे परिसमुह्य परिस्तीर्योत्तरतो गार्हपत्यस्य पात्रेभ्यः सँस्तीर्य द्वन्द्वं पात्राणि[3] प्रयुनक्ति दोहनं निदाने कुम्भी शाखापवित्रं च ॥ ७ ॥ बर्हिषः पवित्रे कुरुते समावछिन्नप्रान्तौ दर्भौ प्रादेशमात्रौ ॥ ८ ॥ पवित्रे स्थो वैष्णवे इत्योषध्या छित्त्वा विष्णोर्मनसा पूते स्थः इत्यद्भिस्त्रिरुन्मृज्य प्रोक्षणीः सँस्कुरुते ॥ ९ ॥ देवो वः सवितोत्पुनातु इति गायत्र्या त्रिः पच्छ उत्पूय देवीरापोऽग्रेगुवः

१. B, N omit.
२. Thus N; CR निधाय
३. Thus N; CR सांनाय्यपात्राणि

इत्यभिमन्त्र्य शुन्धध्वं दैव्याय कर्मणे इति पात्राणि त्रिः प्रोक्षति ॥१०॥ उपसृष्टां मे प्रब्रूतात् । विहारं च गां चोपसृष्टामन्तरेण मा संचारिषुः इति संप्रेष्यति ॥ ११ ॥ निष्टप्तँ रक्षो निष्टप्ता अरातयः इति कुम्भीं निष्टप्य वसूनां पवित्रमसि इति प्रागग्रं पवित्रमवदधाति ॥ १२ ॥ द्यौरसि इत्यभिमन्त्र्य मातरिश्वनो घर्मः इत्यधिश्रयति ॥१३॥ अन्वारभ्य वाचँ यच्छति ॥ १४ ॥ न रिक्तामवसृजति[1] ॥ १५ ॥ पोषाय त्वा इति वत्समवसृज्यमानमनुमन्त्रयते ॥१६॥ अयक्ष्मा वः प्रजया सँसृजामि रायस्पोषेण बहुला भवन्तीः[2] इति संगच्छमानाम् ॥ १७ ॥ अदित्या रास्नासि इति निदीयमानाम् ॥ १८ ॥ ऊर्जस्वतीर्घृतवत् पिन्वमाना जीवा जीवन्तीरुप वः सदेम इत्युपसन्नाम्[3] ॥ १९ ॥

वत्सं दुहन्ति कलशं चतुर्बिलमिडां धेनुं मधुमतीँ स्वस्तये ।
तदिन्द्राग्नी जिन्वतां सूनृतावत्तद्यजमानमपि स्वर्गे लोके दधातु ॥

इति धाराघोषम् ॥ २० ॥ दोग्धारं पृच्छति कामधुक्षः इति । अमूम् इति नामादिशति ॥ २१ ॥ सा विश्वायुरस्त्वसौ इति नामग्राहमनुमन्त्रयते । सा विश्वभूः इति द्वितीयाम् । सा विश्वकर्मा इति तृतीयाम् ॥ २२ ॥ दुग्धमवनयति ॥ २३ ॥ तिस्रो यजुषा दोहयति तिस्रस्तूष्णीम् ॥२४॥ तिसृषु दुग्धासु त्रिरुच्चैर्वाचँ विसृजते ॥ २५ ॥ बहु दुग्धीन्द्राय देवेभ्यो हविः इति संप्रेष्यति । महेन्द्राय इति महेन्द्रयाजिनः ॥ २६ ॥ विसृष्टवागनन्वारभ्योत्तरा दोहयति ॥ २७ ॥

संपृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः ।
पृञ्चतीः पयसा पयो मन्द्रा धनस्य सातये ॥

इति कुम्भ्याँ संक्षालनमानयति ॥२८॥ हुतः स्तोकः इति स्कन्नप्रायश्चित्तं जपति ॥ २९ ॥ वर्त्म कुर्वन्नुदगुद्वासयति दँह गा दँह गोपतिं मा ते यज्ञपती रिषत् इति ॥ ३० ॥ शीतबुध्नं दध्नातनक्ति द्वयोरेकस्या वा

---

१. Thus emended; B, N, CR रिक्त°

२. Thus B, N; CR भवंतु

३. Thus B, N; CR इत्यपसन्नं

दुग्धेन पूर्वेद्युर्निहितेन ॥ ३१ ॥ इन्द्राय त्वा भागँ सोमेनातनच्मि इत्यातनक्ति । महेन्द्राय इति महेन्द्रयाजिनः ॥ ३२ ॥ यवागूरग्निहोत्रम् । तस्याः पिण्डं प्रतिनयति अदस्तमसि विष्णवे त्वा इति ॥३३॥ विष्णो हव्यँ रक्षस्व इति निधाय आपो जागृत इति सोदकेन पात्रेणामृन्मयेनापिदध्यात् ॥ ३४ ॥ यदि मृन्मयँ स्यात्तृणं काष्ठँ वावदध्यात् ॥ ३५ ॥ तेन धर्मेण प्रातर्दोहाय वत्सानपाकरोति ॥ ३६ ॥ सोमयाजिनोऽमावास्यायां नित्यँ संनयनँ यथाकाम्यसोमयाजिनः ॥ ३७ ॥ शुश्रुवान् ग्रामणी राजन्य इति गतश्रियः ॥ ३८ ॥ और्वो गौतमो भारद्वाज इति महेन्द्रँ यजेरन् गतश्रियश्च ॥ ३९ ॥ इतरे सँवत्सरमिन्द्रमिष्ट्वाग्नये व्रतपतयेऽष्टाकपालं निरुप्य महेन्द्रँ यजेरन् ॥ ४० ॥

॥ इतीष्टिसूत्रे द्वितीयेऽध्याये[1] द्वितीयं खण्डम् ॥

अमावास्यायामपराह्णे पिण्डपितृयज्ञाय प्राग्दक्षिणैकोल्मुकं प्रणयेत्

अपेतो यन्त्वसुरा: पितृरूपा ये रूपाणि प्रतिमुच्याचरन्ति ।
परापुरो निपुरो ये भरन्त्यग्निष्टान् लोकान् प्रणुदात्वस्मात् ॥

इति ॥ १ ॥ उत्तरतः प्रणीतस्य वेदिमुद्धन्ति स्फ्येन सकृत्पराचीनम् अपेतो यन्त्वसुरा ये पितृषदः इति ॥ २ ॥ प्राग्दक्षिणाग्रैर्दर्भैर्दक्षिणाग्निं[2] परिस्तीर्य दक्षिणतोऽग्नेरेकैकं पात्राणि प्रयुनक्ति चरुं मेक्षणं पिण्डनिधानमुलूखलमुसलं कृष्णाजिनँ शूर्पम् ॥ ३ ॥ सकृदाछिन्नस्य बर्हिष एकपवित्रं कृत्वा तूष्णीं प्रोक्षणीँ सँस्कृत्य पात्राणि सकृत् प्रोक्षति ॥ ४ ॥ एकपवित्रमन्तर्धायाग्निष्ठादधि चरुणा व्रीहीन्निर्वपति[3] ॥ ५ ॥ पूरयित्वा विमृज्य कृष्णाजिनेऽध्यवहन्ति प्राग्दक्षिणामुखा[4] परापावम्[5]

1. B, N omit.
2. Thus emended; N प्राग्दक्षिणाग्रैद्दक्षिणाग्निं; CR प्राग्दक्षिणाग्रैर्दक्षिणाग्निं
3. CR reads sūtras 5 and 6 as one sūtra.
4. B, N प्राग्दक्षिणामुखो
5. B, N न पवित्रँ

॥ ६ ॥ सकृत्फलीकृतान् दक्षिणाग्नौ श्रपयति प्रसव्यमुदायावं जीव-तण्डुलम् ॥ ७ ॥ शृतं प्रतिनयति ॥ ८ ॥ घृतेनानुत्पूतेन नवनीतेन वोत्पूतेन शृतमभिघार्य दक्षिणत उद्वास्यैकस्फ्यायामासिच्य[1] सकृदाच्छिन्नं प्रोक्षति ॥ ९ ॥ एकस्फ्याँ स्तीर्त्वा[2] चरुं मेक्षणं पिण्डनिधानमित्येकैकं बर्हिष्यासादयति[3] ॥ १० ॥ परिश्रयत्यादित्यसकाशात् ॥ ११ ॥ कशिपुँ सोपधानं पश्चादग्नेरास्तीर्य पितॄनावाहयति एत पितरः इति ॥ १२ ॥ यज्ञोपवीती मेक्षणेन तिस्र आहुतीर्जुहोति सोमाय पितृमते स्वधा नमः ॥ यमायाङ्गिरस्वते स्वधा नमः ॥ अग्नये कव्यवाहनाय स्वधा नमः इति दक्षिणां दक्षिणाम् ॥ १३ ॥ उदकलेपं मेक्षणमग्नावनुप्रहरति ॥ १४ ॥ याजमानमत[4] ऊर्ध्वम् ॥ १५ ॥ परेतन पितरः इति त्रिरपः परिषिञ्चति त्रिः पात्रं प्रतिपरिहरति ॥ १६ ॥ त्रीनुदकाञ्जलीन्निनयति आचामन्तु पितरः इति ॥ १७ ॥ बर्हिषि त्रीन् पिण्डान्निदधाति दक्षिणं दक्षिणम् एतत्ते मम पितरसौ इति पितुर्नाम गृहीत्वा एतत्ते मम पिता-महासौ इति पितामहस्य एतत्ते मम प्रपितामहासौ इति प्रपितामहस्य ॥ १८ ॥ ये चात्र त्वानु[5] तेभ्यः स्वधा इत्यनुषजेत् ॥ १९ ॥ एतत्तेऽमुष्य पितरेतत्तेऽमुष्य पितामहैतत्तेऽमुष्य प्रपितामह इति प्रवसति यजमानेऽध्वर्युः ॥ २० ॥ यदि नामानि न जानीयात् स्वधा पितृभ्यः पृथिवीषद्भ्यः स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः स्वधा पितृभ्यो दिविषद्भ्यः इति निदध्यात् ॥ २१ ॥ लुप्येत जीवत्पितुः पिण्डनिधानम् ॥ २२ ॥ न जीवन्त-मतिदद्यात् ॥ २३ ॥ जीवत्पितामहश्चेत् पितुरेकः पिण्डः ॥ २४ ॥

---

१. B, N °कस्फ्यामासिच्य

२. N स्तीर्त्वा

३. B, N हविष्या°

४. Thus B, N; CR यजमानोऽत. CR reads sūtras 15 and 16 as one sūtra.

५. Thus N and Hemādri *Caturvargacintāmaṇi*, *Śrāddhakalpa* p. 1489; CR त्वामनु

लेपः पित्रे ॥ २५ ॥ तथोदकमाञ्जनाभ्यञ्जने च ॥ २६ ॥ बर्हिषि लेपं निमार्ष्टि यात्र पितरः स्वधा तया यूयँ यथाभागं मादयध्वम् इति ॥२७॥ अत्र पितरो मादयध्वम् इत्युदङ्ङावृत्या तमितोरासित्वा येह पितर ऊर्क्तस्यै वयं ज्योग्जीवन्तो भूयास्म इति अमीमदन्त पितरः इति परिश्रितं प्रपद्याञ्जनाक्ताः शलाकाः प्रतिपिण्डं निदधाति आङ्क्ष्वासौ इत्याञ्जनेन अभ्यङ्क्ष्वासौ इत्यभ्यञ्जनेन च ॥ २८ ॥ एषा युष्माकं पितरः इत्यूर्णां दशाँ वा न्यस्यति । इमा अस्माकम् इत्यवशिष्टा अवेक्षते ॥ २९ ॥ लोमोत्तरवयसि न्यस्येत् अतो नः पितरोऽन्यन्मा योष्ट इति ॥ ३० ॥ तेन धर्मेण परिषिच्य मार्जयन्तां पितरः ॥ मार्जयन्तां पितामहाः ॥ मार्जयन्तां प्रपितामहाः इति बर्हिषि त्रीनुदकाञ्जलीन्निनीय निह्नुतेऽञ्जलिं कृत्वा नमो वः पितरो मन्यवे ॥ नमो वः पितर इषे ॥ नमो वः पितर ऊर्जे ॥ नमो वः पितरः शुष्माय ॥ नमो वः पितरो रसाय ॥ नमो वः पितरो बलाय ॥ नमो[१] वः पितरो यज्जीवं तस्मै ॥ नमो वः पितरो यद् घोरं तस्मै ॥ स्वधा वः पितरः ॥ नमो[१] नमो वः पितरः ॥ येऽत्र पितरः प्रेता युष्माँस्तेऽनु य इह पितरो जीवा अस्माँस्तेऽनु ॥ येऽत्र पितरः प्रेता यूयं तेषाँ वसिष्ठा भूयास्थ य इह पितरो जीवा अहं तेषाँ वसिष्ठो भूयासम् इति ॥ ३१ ॥ शेषमवजिघ्रेत् । आमयाव्यन्नाद्यकामो वा प्राश्नीयात् ॥ ३२ ॥ प्रजापते न त्वद् इत्युत्तिष्ठति ॥ ३३ ॥ परेतन इति यजमानः प्रवाहणीं जपति ॥३४॥ उभौ मनस्वतीः मनो न्वाहुवामहे इति तिस्रः ॥ ३५ ॥

वयँ सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहि ॥

इति च । अक्षन्नमीमदन्त इति च ॥ ३६ ॥ प्राप्य आ ते अग्न इधीमहि इति गार्हपत्यमुपतिष्ठते ॥ ३७ ॥ मध्यमं पिण्डं पत्नी प्राश्नीयात्

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ।
यथायं पुमान् स्यात् ॥

१–१. Omitted in B, N; added from MS I. 10. 3 and Hemādri *op. cit.* p. 1460.

इति ॥ ३८ ॥[1] इतरावग्नावनुप्रहरेद् ब्राह्मणो वा[2] प्राश्नीयादपो[2] वा गमयेत् ॥ ३९ ॥ द्वे द्वे अभ्युक्ष्य पात्राणि प्रत्याहरति ॥ ४० ॥ औपासनं गार्हपत्यदक्षिणाग्निस्थानीयं कृत्वाप्यनाहिताग्नेः पिण्डपितृयज्ञं कुर्वीत ॥ ४१ ॥

॥ इतीष्टिसूत्रे द्वितीयेऽध्याये[3] तृतीयं खण्डम् ॥

प्रातर्हुतेऽग्निहोत्रे वेषाय वाम् इति पाणी प्रक्षाल्याग्नीन् परिस्तीर्य दक्षिणतो ब्रह्मयजमानाभ्याँ स्तीर्त्वा संततं पृष्ठ्याँ स्तृणाति गार्हपत्याद्ध्याहवनीयाद् यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि इति ॥ १ ॥ उत्तरतः पृष्ठ्यायाः पात्रेभ्यः सँस्तीर्य द्वन्द्वं पात्राणि प्रयुनक्ति[4] स्फ्यं कपालान्यग्निहोत्रहवणीँ शूर्पँ कृष्णाजिनँ शम्यामुलूखलमुसलं दृषदुपलं खादिरँ स्रुवं पालाशीं जुहूमाश्वत्थीमुपभृतँ वैकङ्कतीं ध्रुवाँ शमीमयीर्वारत्निमात्रीः ॥ २ ॥ वरणमयानि शिष्टानि[5] ॥ ३ ॥ पात्रीमिडाचमसँ वेदँ वेदप्ररवान् कुटरुमाज्यस्थालीं चरुं प्राशित्रहरणं प्रणीतापात्रं पत्नीयोक्त्रं प्रातर्दौहिकानि ॥ ४ ॥ चमसेनापः प्रणयति । काँस्येन ब्रह्मवर्चसकामस्य दोहनेन पशुकामस्य मृन्मयेन प्रतिष्ठाकामस्यायसेनाभिचरतः ॥ ५ ॥ वानस्पत्योऽसि इति चमसमादाय देवेभ्यः शुन्धस्व इति चमसं प्रक्षालयति ॥ ६ ॥ पार्थिवमसि । देवेभ्यः शुम्भस्व इतीतरान् ॥ ७ ॥ पश्चाद्गार्हपत्यस्य पवित्रान्तरापो गृह्णीते पृथिवीं मनसा ध्यायन् यद्वो रेवती रेवत्यँ यद्वो हविष्या हविष्यम् । यद्व ओजो यच्च नृम्णं तँ व ऊर्मिं मधुमन्तं देवयज्यायै जुष्टं गृह्णामि इति ॥८॥ प्रोक्षणीर्धर्मैः सँस्कृत्य ब्रह्मन्नपः प्रणेष्यामि इत्यामन्त्र्यावधाय

१. CR reads sūtras 38 and 39 as one sūtra.
२. Thus N; CR वाश्नीया.°
३. B, N omit.
४. Thus N; CR प्रयुणक्ति.
५. Thus B, N; CR शिष्टानि पात्राणि.

पवित्रे स्फ्येन सह प्रणयति समं प्राणैर्धारयमाणः को वः प्रणयति स वः प्रणयतु। कस्मै वः प्रणयति तस्मै वः प्रणयतु। बृहस्पतिर्वः प्रणयतु पोषाय त्वा इति ॥ ९ ॥ उत्तरत आहवनीयस्य स्फ्येनोद्धृत्य सादयति को वो युनक्ति स वो युनक्तु। कस्मै वो युनक्ति तस्मै वो युनक्तु। बृहस्पतिर्वो युनक्तु। विश्वेभ्यः कामेभ्यो देवयज्यायै इति ॥ १० ॥ अध्वर्युयजमानौ वाचँ यच्छेतामा हविष्कृतः ॥११॥ परिस्तरणैरवछाद्य[1] पवित्रपाणिः पात्राणि संमृशति सँसीदन्तां दैवीर्विशः इति ॥ १२ ॥ वानस्पत्यासि इत्यग्निहोत्रहवणीमादत्ते ॥१३॥ वर्षवृद्धमसि इति शूर्पम् ॥ १४ ॥ उर्वन्तरिक्षँ वीहि इति व्रजति ॥ १५ ॥ प्रत्युष्टँ रक्षः इत्याहवनीये प्रतितप्य यजमान हविर्निर्वप्स्यामि इति यजमानमामन्त्रयते ॥ १६ ॥ यदि प्रवसेत् अग्ने हविर्निर्वप्स्यामि इति ब्रूयात् ॥ १७ ॥ व्रीह्याग्रयणेनेष्ट्वा व्रीहिभिर्यजेता यवेभ्यो यवैरा[2] व्रीहिभ्यः ॥ १८ ॥ पश्चादग्निष्ठँ शकटँ योग्यकृतं छदिष्मत् सपरिणत्कम्[3] ॥ १९ ॥ तस्मादधि निर्वपति ॥ २० ॥ पात्र्या वा स्फ्यमवधायानसान् मन्त्रान् जपन् ॥ २१ ॥ धूरसि इति धुरावभिमृशति[4] ॥ २२ ॥ देवानामसि वह्नितमम् इत्युत्तरामीषामालभ्य जपति ॥ २३ ॥ विष्णोः क्रमोऽसि इति पादमादधाति ॥ २४ ॥ अह्रुतमसि इत्यारोहति ॥ २५ ॥ उरु वाताय इत्यवसारयति ॥ २६ ॥ मित्रस्य वश्चक्षुषा प्रेक्षे इति हविष्यान् प्रेक्षते ॥२७॥ अग्निहोत्रहवण्यामवधाय मुष्टिना निर्वपत्यग्निहोत्रहवण्याः शूर्पे देवस्य वः इति अग्नये वो जुष्टान्निर्वपाम्यमुष्मै वो जुष्टान् इति यथादेवतम्। त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ २८ ॥ इदं देवानाम् इति निरुप्तानभिमृशति। इदमु नः सह इत्यवशिष्टान् ॥ २९ ॥ गोपीथाय

१. Thus B, N; CR परिस्तरणैः स्वाछाद्य
२. B यवैस; N यवैदरा; CR यवैर्वा
३. Thus N; CR सपरिणट्कम्
४. Thus B, N; CR धुरमभि०

त्वा रक्षायै त्वा नारात्यै इति निरुप्तान् ॥ ३० ॥ दृँहन्तां दुर्याः इत्यवरोहति ॥ ३१ ॥ स्वाहा द्यावापृथिवीभ्याम् इति स्कन्नप्रायश्चित्तं जपति ॥ ३२ ॥ निर्वरुणस्य इति शकटं निष्क्रामयति ॥३३॥ स्वरभिव्यख्यशम् इत्याकाशं प्रेक्षते ॥ ३४ ॥ ज्योतिर्वैश्वानरम् इत्याहवनीयम् ॥ ३५ ॥ उर्वन्तरिक्षमन्विहि ॥ अदित्यास्त्वोपस्थे सादयामि इति पश्चाद्गार्हपत्यस्य सादयति ॥ ३६ ॥ अग्ने हव्यँ रक्षस्व इति पुर उपसादयति ॥ ३७ ॥ अनिर्मृष्टायामग्निहोत्रहवण्यां प्रोक्षणीः[१] सँस्कृत्य हविष्यान्[२] प्रोक्षत्यनभिप्रोक्षन्नग्निम् अग्नये वो जुष्टान् प्रोक्षाम्यमुष्मै वो जुष्टान् इति यथादेवतम् । त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ३८ ॥ पात्राणि च यद्वोऽशुद्ध आलेभे इति त्रिरुत्तानानि पर्यावर्त्य ॥ ३९ ॥ अदित्यास्त्वगसि इति कृष्णाजिनमादाय अवधूतँ रक्षः इत्युत्करे त्रिरवधूनोत्युपरिष्टाद्ग्रीवमुद्गाशसनम् ॥ ४० ॥ अदित्यास्त्वगसि प्रति त्वादित्यास्त्वग्वेत्तु इति[३] पश्चादुत्करस्यास्तृणाति प्रत्यग्ग्रीवमुत्तरलोम प्रत्यग्भसदमभिभुजम्[४] ॥ ४१ ॥ अनतिसृजन्[५] कृष्णाजिनमुलूखलमादधाति पृथुग्रावासि इति ॥४२॥ न रिक्तमवसृजति ॥४३॥ अग्नेर्जिह्वासि इति हविष्यानावपति[६] । त्रिर्यजुषा चतुर्थम् ॥४४॥ बृहद्ग्रावासि इति मुसलमादाय[७] अपहतँ रक्षो हविष्कृदेहि इत्यवहन्ति ॥४५॥ अपहतोऽघशँसो हविष्कृदेहि इति द्वितीयम् ॥४६॥ अपहता यातुधाना हविष्कृदेहि इति तृतीयम्[८] ॥४७॥ हविष्कृदागहि

---

१. Thus B, N; CR प्रोक्षणीँ
२. N हविष्यन्; CR हविष्यं
३. CR ends sūtra 41 here.
४. Thus B, N; CR °मभिभुजन्
५. Thus emended. B, N अनभिसृजन्; CR emends as अनुत्सृजन्.
६. Thus B, N; CR हविष्यान् वपति
७. Thus B, N; CR adds ऊर्ध्वसूर्वनस्पत्य इति वा from "second hand" and ends the sūtra.
८. CR enumerates latter part of sūtra 45 and sūtras 46 and 47 as one sūtra.

इति राजन्यस्य। हविष्कृदाद्रव इति वैश्यस्य ॥ ४८ ॥ पत्न्यवहन्ति ॥ ४९ ॥ कुटरुरसि इत्याग्नीध्रः कुटरुमादाय इषमावद इति दृषदमाहन्ति। ऊर्जमावद इति द्वितीयम्। रायस्पोषमावद इत्युपलाम् ॥ ५० ॥ त्रिरेतेन धर्मेण ॥ ५१ ॥ वर्षवृद्धमसि इति शूर्पमादत्ते ॥ ५२ ॥ वर्षवृद्धाः स्थ इति हविष्यान् प्रेक्षते ॥ ५३ ॥ प्रति त्वा वर्षवृद्धँ वेत्तु इत्युद्वपति ॥५४॥ परापूतँ रक्षः इत्युत्करे[१] निष्पुनाति ॥५५॥ पुरोडाशकपाले तुषानोप्याधस्तात् कृष्णाजिनस्योपास्यति प्रविद्धो रक्षसां भागः इति ॥ ५६ ॥ इदमहँ रक्षोऽवबाध इदमहँ रक्षोऽधमं तमो नयामि इति पार्ष्ण्या तुषानवबाधते ॥५७॥ अपः स्पृष्ट्वा विविनक्ति देवो वः सविता विविनक्तु सुविचा विविच्यध्वम् इति ॥ ५८ ॥ विविक्तानावपति ॥ ५९ ॥ देवेभ्यः शुन्धध्वम् इति त्रिः फलीकरोति ॥ ६० ॥ तेन धर्मेणानभिभुजं[२] कृष्णाजिनमास्तीर्य धिषणासि पार्वती इति दृषदमादधाति ॥ ६१ ॥ धिषणासि पार्वती प्रति त्वा पार्वती वेत्तु इत्युपलाम् ॥ ६२ ॥ अदित्याः स्कम्भोऽसि इति शम्यामुपकर्षति पश्चादुदीचीनकुम्बाम्[३] ॥ ६३ ॥ धान्यमसि इत्यधिवपति। त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ६४ ॥ प्राणाय त्वा इति प्राचीमुपलां प्रकर्षति अपानाय त्वा इति प्रतीचीम्। व्यानाय त्वा इति मध्ये व्यवधारयति ॥ ६५ ॥ दीर्घामनु प्रसृतिम् इति प्राची[४] सँस्थापयति ॥ ६६ ॥ मित्रस्य वश्चक्षुषावेक्षे इति पिष्टान्यवेक्षते ॥ ६७ ॥ देवो वः सविता हिरण्यपाणिरुपगृह्णातु इत्यवशीर्यमाणान्युपगृह्णाति ॥६८॥ दासी पिनष्टि पत्नी वा ॥६९॥ अणूनि कुरुतात् इति संप्रेष्यति॥७०॥

॥ इतीष्टिसूत्रे द्वितीयेऽध्याये[५] चतुर्थं खण्डम् ॥

॥ इति द्वितीयोऽध्यायः[६] ॥

१. CR इत्युत्तरे probably a printing mistake.
२. Thus emended. cf. sūtra 41; B, N, CR धर्मेणानभिभुजन्
३. B, N °दुदीचीनगुल्मान्.
४. Thus B; N, CR omit
५. B, N omit.
६. N adds समाप्तः

ॐ

धृष्टिरसि ब्रह्म यछ इत्युपवेषमादाय गार्हपत्यादङ्गारौ निर्वर्तयति अपाग्नेऽग्निमामादं जहि इति ॥ १ ॥ निष्क्रव्यादं नुदस्व इत्यन्यतरं निरस्यति ॥ २ ॥ अग्ने[1] देवयजनँ वह इति द्वितीयमवस्थाप्य तस्मिन् कपालमुपदधाति ध्रुवमसि पृथिवीं दँह इति ॥ ३ ॥ अनतिसृजन् कपालमङ्गारमधिवर्तयति निर्दग्धँ रक्षः इति ॥४॥ धरुणमसि इति पूर्वमुपदधाति धर्ममसि इति पूर्वार्ध्यम्[2]। धर्मासि इति मध्यमाद्दक्षिणम्। चिदसि इत्युत्तरम्। परिचिदसि इति दक्षिणार्ध्यात्[3] पूर्वम्। विश्वासु दिक्षु सीद इत्यपरम्। सजातानस्मै यजमानाय परिवेशय सजाता इमँ यजमानं परिविशन्तु इत्युत्तरार्ध्यात् पूर्वम् ॥ ५ ॥ अष्टाकपाल आग्नेय एकादशकपाल ऐन्द्राग्न ऐन्द्रश्च ॥ ६ ॥ एतेन धर्मेणोत्तरस्मिन्नष्टावुपधाय चितः स्थ परिचितः स्थ इति शेषमुपदधाति ॥ ७ ॥ वसूनाँ रुद्राणाम् इत्यङ्गारानभ्युहृय[4] तप्ताद्धयश्चरुमधिश्रित्य[5] प्रातर्दोहं दोहयति यथा सायंदोहम् ॥ ८ ॥ उदगग्रं पवित्रमवदधाति ॥ ९ ॥ शृतं करोति। नातनक्ति ॥ १० ॥ उद्वास्य प्रातर्दोहं पिष्टानि सँवपति निष्टप्तोपवातायां पात्र्यां पवित्रे अवधाय वाग्यतो देवस्य वः इति अग्नये वो जुष्टान् सँवपाम्यमुष्मै वो जुष्टान् इति यथादेवतम्। त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ११ ॥ तप्ता अपो मदन्तीरुत्पूय हविरुत्पुनाति पच्छो गायत्र्या ॥ १२ ॥ आहरति स्रुवेण प्रणीतानाँ वेदमुपयामं कृत्वा ॥ १३ ॥ ताभिः सँसृजति समापा ओषधीभिः इति ॥ १४ ॥ अद्भिः परिप्रजाताः स्थ समद्भिः पृच्यध्वम्

१. CR आग्ने
२. Thus emended; B, N, CR पूर्वार्ध
३. Thus emended; B, N, CR दक्षिणार्धात्
४. Thus N; B अभ्यूह्य; CR अध्यूहृय.
५. Thus B, N; cf VārŚS I. 3.1. 12; CR तप्ताम्यश्चरु°

इति मदन्तीभिः ॥ १५ ॥ सीदन्तु विशः इति संनयति ॥१६॥ मखस्य शिरोऽसि इति पिण्डमभिमन्त्र्य पूषा वाँ विश्ववेदा विभजतु यथाभागँ व्यावर्तेथाम् इति समौ करोति ॥ १७ ॥ इदमग्नेः,[1] इदमग्नीषोमयोः इत्यभिमन्त्र्य[2] पौर्णमास्याम् ॥ १८ ॥ यथादेवतममावास्यायाम् ॥१९॥ घर्मोऽसि इत्यधिश्रयति ॥ २० ॥ उरु प्रथस्व इति प्रथयति यावत्कपालं कूर्मस्यानुरूपमश्वशफमात्रम् ॥ २१ ॥ सं ते तन्वा तन्वः पृच्यन्ताम् इत्यविक्षारयन् लेपेन परिमार्ष्टि ॥ २२ ॥ दक्षिणत आज्यं निर्वपति ॥ २३ ॥ अदितिरसि नाछिन्नपत्रा इत्याज्यस्थालीमादाय दक्षिणाग्नौ विलाप्य पवित्रान्तरा पृश्नेः पयोऽस्यग्रेगुवस्तस्य तेऽक्षीयमाणस्य पिन्वमानस्य जिन्वमानस्येष ऊर्जे जुष्टं निर्वपामि देवयज्यायै इति ॥ २४ ॥ परि वाजपतिः इत्याज्यँ हविश्च त्रिः पर्यग्निं[3] करोति सह लेपेन ॥२५॥ देवस्त्वा सविता श्रपयतु इत्युल्मुकेनाभिताप्य अग्ने ब्रह्म गृह्णीष्व इत्युल्मुकमवसृज्य दर्भैस्त्वचं ग्राहयति अग्निष्टे त्वचं मा हिँसीत् इत्यनपोहन् ज्वालान् ॥ २६ ॥ सं ब्रह्मणा पृच्यस्व इति वेदेन सहाङ्गारं भस्माभ्यूहति ॥ २७ ॥ अविदहन्तः श्रपयत इत्यङ्गारानभ्युह्य[4] वाचँ विसृजते ॥ २८ ॥ अन्तर्वेदि प्रागुदीचीः स्फ्येन तिस्रो लेखाः कृत्वा तासु लेपं निनयत्यसँसारयन् एकताय स्वाहा, द्विताय स्वाहा, त्रिताय स्वाहा इति पर्यायैः ॥२९॥[5] आहवनीयादुल्मुकेनाभिताप्य वेदिं करोति ॥ ३० ॥ खादिरँ स्फ्यं भृष्टिलमादत्ते सावित्रेण ॥ ३१ ॥ इन्द्रस्य बाहुरसि इति दर्भेण संमृज्य पृथिव्या वर्मासि इति पूर्वस्मिन् वेदितृतीये दर्भं निधाय स्फ्येन तिर्यक् छिनत्ति त्रिचतुर्थं पृथिवि देवयजनि इति

१. Thus B, N; CR इदमग्नेरित्याग्नेयम्.

२. Thus B, N; CR इत्यग्नीषोमीयमभिमन्त्र्य

३. CR पर्यग्नि.

४. CR अभ्यूह्य. cf. Pāṇini 7. 4. 23.

५. CR ends sūtra 29 after आहवनीयादुल्मुकेनाभिताप्य in the next sūtra, but cf. ĀpŚS I. 25.16

॥ ३२ ॥ व्रजं गच्छ गोस्थानम् इति तृणाग्रमादत्ते पाँसूँश्चाखात्वा ॥३३॥ वर्षतु ते पर्जन्यः इति वेदिमवेक्षते ॥ ३४ ॥ बधान देव सवितः इति स्फ्येन सतृणान् पाँसून् हरति ॥ ३५ ॥ उत्तरत आग्नीध्रस्तुषान् वेदमूलानीत्युत्करं परिगृह्णाति ॥ ३६ ॥

इदं तस्मै हर्म्यँ कृणोमि[1] यो वो देवाश्चरति ब्रह्मचर्यम् ।
मेधावी दिक्षु मनसा तपस्व्यन्तर्दूतश्चरति मानुषेषु ॥

इति तस्य पाणिकोष्ठे निवपति ॥ ३७ ॥ यो अस्मान् द्वेष्टि यं च वयं द्विष्मः इत्यभिचरन् ॥ ३८ ॥ मा वः शिवा ओषधयः इति द्वितीयम् ॥ ३९ ॥ द्रप्सस्ते इति तृतीयम् ॥ ४० ॥ एतेन धर्मेण त्रियजुषा हरति तूष्णीं चतुर्थम् ॥ ४१ ॥ अपवाढँ रक्षोऽपवाढोऽघशँसोऽपवाढा यातुधानाः इति स्फ्येनोत्करमपिधत्ते ॥ ४२ ॥ अग्रेण गार्हपत्यमपरेणाहवनीयँ स्फ्येन वेदिं परिगृह्णाति यजमानमात्रीं प्राचीँ यथा हवीँष्यासन्नानि संभवेयुस्तावतीं तिरश्चीम् ॥ ४३ ॥ सत्यसदसि इति पश्चार्धादुदीचीं लेखां लिखति । ऋतसदसि इति दक्षिणार्धात् प्राचीम् । धर्मसदसि इत्युत्तरार्धात् प्राचीम् ॥ ४४ ॥ खेयां प्रतिष्ठाकामस्य कुर्यात् ॥४५॥ अपाररुम् इति द्व्यङ्गुलं खात्वा स्फ्येन मूलान्युद्धृत्योत्करे निवपति ॥ ४६ ॥ आहार्यपुरीषां पशुकामस्य कुर्यात् ॥ ४७ ॥

॥ इतीष्टिसूत्रे तृतीयेऽध्याये[2] प्रथमं खण्डम् ॥

इमां नराः[3] कृणुत वेदिमेत्य देवेभ्यो जुष्टामदित्या उपस्थे ।
ताँ विश्वे देवा अजुषन्त सर्वे रायस्पोषा यजमानँ सँविशन्तु ॥

इति सँसृष्टामाहवनीयलक्षणेन[4] । प्राञ्चावँसावुन्नयति । प्रतीची श्रोणी

---

१. Thus B, N; CR करोमि.

२. B, N omit.

३. Thus N; CR नरः

४. Thus emended; B संमृष्टामाहवनीयलक्ष्म्यैन; N सँसृष्टामाहवनीयलक्ष्म्यैन; CR संमृष्टामाहवनीयलक्ष्म्यै.

प्रागुदक्प्रवणाँ[1] संनतमध्यामन्तिकजघनाम् ।। १ ।। एतदन्तं पूर्वेद्युः करोति ।। २ ।। पाणी[1] प्रक्षाल्य स्फ्यं प्रक्षालयत्यप्रतिमृशन्नग्रम् ।। ३ ।। वेदिमवोक्ष्य ब्रह्मन्नुत्तरं[2] परिग्राहं[2] परिग्रहीष्यामि इत्यामन्त्र्य परिगृह्णाति । वसवस्त्वा इति पश्चात् रुद्रास्त्वा इति दक्षिणतः आदित्यास्त्वा इत्युत्तरतः ।। ४ ।। धा असि स्वधा असि । उर्वी चासि वस्वी चासि रन्ती चासि ।। पुरा क्रूरस्य इति च स्फ्येन वेदिँ संमृज्यापरस्मिन् वेदित्तृतीये तिर्यञ्चँ स्फ्यँ स्तब्ध्वा[3] प्रोक्षणीरासादयेध्मं[4] बर्हिरुपसादय[4] स्रुवं च स्रुचश्च संमृड्ढि पत्नीँ संनह्याज्येनोदेहि इति संप्रेष्यति ।। ५ ।। आग्नीध्रो यथाप्रेषितं करोति ।। ६ ।। प्रोक्षणीरभ्युत्पूय स्फ्याग्रेऽप उपनिनीयोदञ्चँ स्फ्यमवकृष्य स्फ्यस्य वर्त्मन् सादयति ।। ७ ।। न[5] पुरासादनात्[5] स्फ्यमुद्यछेत् ।। ८ ।। स्फ्येनोत्करमवहन्ति[6] द्विषतो वधोऽसि इति पुरस्तात् प्रत्यञ्चम् ।। ९ ।। अभ्युक्ष्य प्रत्यासादयति ।। १० ।। उत्तरत[7] आहवनीयस्य दक्षिणमिध्ममुत्तरं बर्हिः ।। ११ ।। वेदग्रवैः स्रुचः संमार्ष्टि चतुर्धा विभज्याविभज्य वा ।। १२ ।। आहवनीये गार्हपत्ये वा प्रत्युष्टँ रक्षः इति[8] प्रतितप्याभ्यग्रे[9] सपार्श्वाग्रैर्मुखानि[9] मूलैर्दण्डान् ।। १३ ।। आयुः प्राणम् इति सर्वतः स्रुवम् ।।१४।। अग्नेष्ट्वा तेजिष्ठस्य तेजसा निष्टपामि इति संमार्गं निष्टपति ।। १५ ।। चक्षुः श्रोत्रम् इति जुहूमभ्यन्तरं प्राचीं प्रतीचीं बाह्यतः ।। १६ ।। वाचं पशून् इत्युप-

---

१-१. N omit.

२. B, N ब्रह्मन्नुत्तरान्

३. B, N स्तीर्त्वा.

४. Thus B, N; CR emended °येध्माबर्हि° cf. VārŚS I. 3.3.2

५. Thus emended; B, N पुनरासादनात्; CR पुरासदनात्.

६. Thus emended; B, N °मपहन्ति

७. B उत्तरम्; N उत्तर.

८. B, N इत्याहवनीये.

९. B प्रतितप्याभ्यसुप्राश्वंग्रै°; N प्रतितप्याभ्यसपार्श्वाग्रै°

**भृतमभ्यन्तरं प्रतीचीं प्राचीं बाह्यतः ॥ १७ ॥** यज्ञं प्रजाम् **इति सर्वतो ध्रुवाम् ॥ १८ ॥ अभ्युक्ष्य संमार्गानग्नावनुप्रहरति**

दिवि[1] शिल्पमवततं पृथिव्याः ककुभि[2] श्रितम् ।
तेना सहस्रकाण्डेन द्विषन्तं तापयामसि ॥
द्विषन्नस्तप्यतां बहु मा न आगात्ताप्यौषधयः स्वाहा ॥

**इति ॥ १९ ॥** अग्ने गृहपत उप मा ह्वयस्व देवानां पत्नीरुप मा ह्वयध्वम् **इति पत्नी गार्हपत्यमुपतिष्ठते । पत्नीलोकं च** पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिँसीः **इति ॥ २० ॥**

सुप्रजसस्त्वा वयँ सुपत्नीरुपसेदिम ।
अग्ने सपत्नदम्भनँ सुवीरासो अदाभ्यम् ॥

**इति दक्षिणतः पश्चाद्गार्हपत्यस्योपविशति प्रभुज्य जानुनी ॥ २१ ॥ योक्त्रेण पत्नी संनह्यतेऽन्तर्वस्त्रम्[3]**

आशासाना सौमनसं प्रजाँ सौभाग्यं तनूम् ।
अग्नेरनुव्रता भूत्वा संनह्ये सुकृताय कम् ॥

**इति ॥ २२ ॥** पूषा ते ग्रन्थिं ग्रथ्नातु **इति ग्रन्थिं करोति ॥ २३ ॥** स ते मा स्थात् **इति दक्षिणतो ग्रन्थिमभ्यूहति ॥ २४ ॥ अपः स्पृष्ट्वा वेदेनाज्यमुपहरति[4] ॥ २५ ॥ तदन्वारभ्याभिसंमील्यावेक्षते** अदब्धेन त्वा चक्षुषावेक्षे रायस्पोषाय सुप्रजास्त्वाय ॥ अदितिरिव सुपुत्रेन्द्राणीवाविधवा सुप्रजाः प्रजया भूयासम् **इति ॥ २६ ॥** इदँ विष्णुः **इति गार्हपत्यदक्षिणाग्न्योरधिश्रयति ॥ २७ ॥** तेजोऽसि **इति द्वितीयं पश्चाद्गार्हपत्यस्य ॥ २८ ॥** तेजोऽनुप्रच्यवस्व **इति हरति ॥ २९ ॥** अग्निष्टे हरो मा विनैत् **इत्याहवनीयेऽधिश्रित्योत्तरतः प्रोक्षणीनाँ स्फ्यस्य वर्त्मन्[5] सादयति ॥ ३० ॥** तेजोऽसि **इति पर्यायैस्त्रिराज्य-**

---

१. Thus B, N; CR दिवः
२. B, N ककुभिः
३. B, N °तर्वसुम्
४. B, N °मपहरति.
५. B, N वर्त्मनि.

मुत्पूयाप उत्पुनाति पच्छो गायत्र्या ॥ ३१ ॥ अमृतमसि इत्याज्य-मवेक्षते ॥३२॥ अन्तर्वेद्याज्यानि स्रुवेण गृह्णाति वेदमन्तर्धाय ॥३३॥ पवित्रे अवधाय धामासि इति गृह्णँश्चतुर्जुह्वां गृह्णाति । अष्टौ गृह्णनु-पभृति कनीयश्चतुर्ध्रुवायाम् ॥३४॥ भूयिष्ठं पञ्चमं पशुकामस्य ॥३५॥

॥ इतीष्टिसूत्रे तृतीयेऽध्याये[1] द्वितीयं खण्डम् ॥

आपो रेभत पिपृत मध्वा समक्ता निषध[2] स्था यामन्नहृणीयमानाः[3] इति प्रोक्षणीभिरभिमन्त्रयते । देवीरापः शुद्धा यूयम् इति च ॥ १ ॥ ब्रह्मन्निध्मँ वेदिं बर्हिः प्रोक्षिष्यामि इत्यामन्त्र्य विस्रस्येध्ममृते परि-धिभ्यः प्रोक्षति ॥ २ ॥ कृष्णोऽस्याखरेष्ठाः इतीध्मँ वेदिरसि इति वेदिं बर्हिरसि इति बर्हिस्त्रिस्त्रिः प्रोक्षति ॥ ३ ॥ देवंगममसि इत्यन्तर्वेद्यासाद्य बर्हिस्त्रिः प्रोक्षति । दिवे त्वा इत्यग्रम् अन्तरिक्षाय त्वा इति मध्यं पृथिव्यै त्वा इति मूलम् ॥ ४ ॥ अग्राण्युपपाद्य ग्रन्थिं परिषिच्य मूलान्युपसिञ्चति ॥ ५ ॥ ऊर्ग्भव बर्हिषद्भ्यः ॥ स्वाहा पितृभ्यो घर्म-पावभ्यः इति दक्षिणतो वेद्याः प्रोक्षणीशेषं निनीय पूषा ते ग्रन्थिँ विष्यतु इति ग्रन्थिँ विस्रस्य यजमाने प्राणापानौ दधामि इति प्रस्तरे पवित्रे अपिसृज्य विष्णोः स्तुपोऽसि इति प्रस्तरँ सहपवित्रमाहवनीयतोऽभिगृह्णात्यविधून्वन्नसंमार्गम्[4] ॥ ६ ॥ अग्रेणाहवनीयं परिहृत्य दक्षिणतो ब्रह्मणे यजमानाय वा प्रयच्छति प्राणापानाभ्यां त्वा सतनुं कृणोमि इति ॥ ७ ॥ मयि प्राणापानौ इति प्रतिगृह्णाति ॥ ८ ॥ दर्भानन्तर्धाय दक्षि-णतः शुल्वँ स्तृणात्युत्तरमँसमभि स्तृणन् बर्हिषः स्तरणमन्त्रेण ॥ ९ ॥ पश्चार्धादुदगग्रमपत्नीकस्य निदध्यात् ॥ १० ॥ उरु प्रथस्व इति

---

१. B, N omit.

२. CR निषाद

३. Thus emended; N यामन्वाहार्यमाना; B, CR यामन्वाहार्यमाणा

४. B, N °विधून्वन्न°

स्तरणम् ।। ११ ।। पूर्वं पूर्वं धातुमपरमपरँ वा स्तृणाति ।। १२ ।। छादयन् मूलानि प्राचीनमन्तर्दधाति वेदिम् ।। १३ ।। प्रस्तरहस्तः परिधिभिराहवनीयं परिदधाति । गन्धर्वोऽसि इति पश्चार्ध्यमुदञ्चम् इन्द्रस्य बाहुरसि इति दक्षिणार्ध्यं प्राञ्चं मित्रावरुणौ त्वा इत्युत्तरार्ध्यं प्राञ्चम् ।। १४ ।। अवकृष्याग्रतरमिध्मादूर्ध्वे समिधावादधाति नित्यहोतारं त्वा इति । तूष्णीमुत्तराम् ।। १५ ।। सूर्यस्त्वा रश्मिभिः इत्याहवनीयमुपस्थाय पुरस्तादप्रच्छिन्नप्रान्तौ दर्भावनन्तर्गर्भावुदगग्रौ बर्हिषि वितनोति विश्वजनस्य विधृती[1] स्थः इति ।। १६ ।। विधृत्योः प्रस्तरँ सादयति दक्षिणार्धे बर्हिषः वसूनाँ रुद्राणाम् इति ।। १७ ।। द्यौरसि इति प्रस्तरे जुहूम् ।। १८ ।। समं प्रस्तरमूलैर्दण्डं करोति ।। १९ ।। अन्तरिक्षमसि इत्युत्तरामुपभृतमधस्ताद्विधृत्योः । पृथिव्यसि इत्युत्तरां ध्रुवामुपरिष्टाद्विधृत्योः ।। २० ।। असँस्पृष्टाः सादयत्यनूचीः ।। २१ ।। ऋषभोऽसि इति दक्षिणतो जुह्वाः पूर्णस्रुवँ सादयति ।। २२ ।। ध्रुवा असदन् इत्याज्यानि संमृशति ।। २३ ।। स्योनं ते सदनं[2] कृणोमि घृतस्य धारया सुशेवं कल्पयामि इति पात्र्यामुपस्तीर्याभिघार्य हवीँष्युद्वासयति आर्द्रः पृथस्नुर्भुवनस्य गोपाः शृत[3] उत्स्नातु जनिता मतीनाम् इति ।। २४ ।। सुरूपं त्वा वसुविदं पशूनां तेजसाग्नये त्वा जुष्टमभिघारयामि इत्याग्नेयमभिघारयति । यथादेवतमुत्तरम् ।। २५ ।। अनभिघ्नन्नपर्यावर्तयन् वेदेन प्रमृज्य पात्र्यामवदधाति ।। २६ ।। इरा भूतिः पृथिव्या रसो[4] मोत्क्रमीत्[4] इति कपालान्यभिघार्य पुरोडाशावलंकरोति तृप्तिरसि गायत्रं छन्दस्तर्पय मा तेजसा ब्रह्मवर्चसेन ।। तृप्तिरसि त्रैष्टुभं छन्दस्तर्पय मेन्द्रियेण वीर्येण ।। तृप्तिरसि जागतं छन्दस्तर्पय मा प्रजया पशुभिः इति ।। २७ ।। खमङ्क्ष्व त्वचमङ्क्ष्व सर्वमात्मानमङ्क्ष्व इति स्वक्तमनी·

१. B, N विधृता
२. N सद्म सदनं ते
३. B, N श्रित
४. B रसेनोत्क्रामत्; N रसोनोत्क्रमात्

काशमनक्ति ।। २८ ।। अधस्तादुपाज्य दोहावलंकरोति

यस्त आत्मा पशुषु प्रविष्टो देवानाँ वेष्टामनु यो विचष्टे[1] ।
आत्मन्वान्त्सोम घृतवानिहेहि[2] स्वर्विन्द यजमानाय मह्यम् ।।

इति ।। २९ ।। पश्चात्स्रुचां प्रत्यग्दण्डां पात्रीमासादयति ।। ३० ।। अग्रेण स्रुचः कुम्भ्यौ संधाय दक्षिणस्याँ वेदिश्रोण्याँ श्रृतमुत्तरस्यां दधि ।। ३१ ।। अग्रेण स्रुचो वेदँ सादयति[3] ।। ३२ ।। वेद्यन्तान् परिस्तीर्य होतृषदनानास्तीर्य[4] अग्नये समिध्यमानायानुब्रूहि इति संप्रेष्यति ।।३३।।

।। इतीष्टिसूत्रे तृतीयेऽध्याये[5] तृतीयं खण्डम् ।।

प्रणवे प्रणवे समिधमादधात्यनुयाजसमिधमवशिष्य ।। १ ।। समिद्धमग्निं त्रिर्वेदेनोपवाजयत्यग्रँ वेद्याः संमार्गम्[6] ।। २ ।। ध्रुवायां पूर्णस्रुवमवनीय ध्रुवाया उपहत्योत्तरेण[7] परिधिसंधिनान्ववहृत्य दक्षिणाप्राञ्चमाघारमाघारयति प्रजापतये स्वाहा इति मनसा ।। ३ ।। अग्नीत् परिधीँश्चाग्निं च त्रिस्त्रिः संमृड्ढि इति संप्रेष्यति ।। ४ ।। स्फ्येन संमार्ष्टीध्मसंनहनैश्च परिधीन् ।। ५ ।। ऋते स्फ्यादग्निमिध्मसंनहनैः समार्ष्टि अग्निं त्वाग्ने सरिष्यन्तँ सनिँ सनिष्यन्तँ वाजं जेष्यन्तं देवेभ्यो हव्यँ वक्ष्यन्तँ वाजिनं त्वा वाजजित्यायै संमार्ज्मि । अग्ने वाजं जय इति[8] ।। ६ ।। सप्रथा नमः इति पुरस्ताज्जुहूपभृतोरञ्जलिं करोति ।। ७ ।। जुह्वेह्यग्निष्ट्वा

१. B विवस्मे; N विवस्ते
२. B घृतवान् येहि; N घृतवान् येह.
३. CR reads sūtras 30-32 as one sūtra.
४. N होत्रेषदना°; CR होतृषदनमा° cf. VārŚS I 6.4.18
५. B, N omit.
६. B, N संमार्ग.
७. B. N अपहत्यो°
८. CR reads sūtras 5 and 6 as one sūtra.

ह्वयति देवान् यक्ष्यावो देवयज्यायै[1] इति[2] जुहूमादत्ते। उपभृदेहि देवस्त्वा सविता ह्वयति देवान् यक्ष्यावो देवयज्यायै[1] इत्युपभृतम् ॥ ८॥ सूयमे मे अद्य स्तम् इत्यभिमन्त्र्य अग्नाविष्णू इत्यतिक्रामति ॥ ९॥ विष्णोः स्थामासि इत्यवतिष्ठते ॥ १०॥ अन्तर्वेदि दक्षिणः पादो भवत्यवघ्र इव सव्यः[3] ॥ ११॥ अथाघारमाघारयति[3] ऊर्ध्वो अध्वरः इति प्रागुदञ्चं संततमूर्ध्वं स्वर्गकामस्य न्यञ्चं द्वेष्यस्य ॥ १२॥ असँस्पर्शयन् स्रुचौ प्रत्यतिक्रामति पाहि माग्ने दुश्चरितादा मा सुचरिताद्भज[4] इति ॥ १३॥ जुह्वा ध्रुवां त्रिः समनक्ति

समक्तमग्निना हविः समक्तँ हविषा घृतम्।
समन्तरिक्षमर्चिषा सं ज्योतिषा ज्योतिः॥

इति ॥१४॥ ध्रुवामभिघार्यायतने स्रुचौ सादयति ॥१५॥ उन्नीतँ राये इति ध्रुवाया आज्यमुन्नयति। सुवीराय स्वाहा इति जुहूमाप्याययति ॥ १६॥ यज्ञेन यज्ञः संततः इति जुह्वा ध्रुवां प्रत्यभिघारयति ॥ १७॥ उत्तरतः[5] प्रवरायावतिष्ठते ॥ १८॥ स्फ्यँ[6] संमार्गं[6] पाणौ कृत्वापर आग्नीध्रः[7] पश्चार्धे होता[7] वेद्यास्तृणमभ्यन्तमपादायाह[8] क इदमध्वर्युर्भविष्यति स इदमध्वर्युर्भविष्यति यज्ञो यज्ञस्य विष्णोः स्थाने तिष्ठामि वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु वाचं प्रपद्ये भूर्भुवः स्वः ॥ १९॥ ब्रह्मन् प्रवरायाश्रावयिष्यामि इत्यामन्त्र्याश्राव्य प्रत्याश्रुत

१. CR देवयज्यया
२. B, N omit portion beginning with इति and ending with देवयज्यायै.
३. B, N सव्योघाघार°
४. One expects सुचरिते भज.
५. CR reads sūtras 18–20 as one sūtra.
६. Thus B, N; CR स्फ्यसंमार्गं
७. Thus B, N; CR आग्नीध्रो
८. B, N °मभ्यन्तमवदायाह

आह अग्निर्देवो दैव्यो होता देवान् यक्षद्विद्वाँश्चिकित्वान् मनुष्वद्भरतवदमुवदमुवत् इति ॥ २० ॥ ऊर्ध्वानृषीन् मन्त्रकृतो यजमानस्य[1] प्रवृणीते ॥ २१ ॥ पुरोहितप्रवरेणाब्राह्मणस्य ॥ २२ ॥ ब्रह्मण्वदा च वक्षद् ब्राह्मणा अस्य यज्ञस्य प्रावितारः इति ॥ २३ ॥ होतुरुपाँशु नामादिशति मानुषः इत्युच्चैः ॥ २४ ॥ घृतवती इति संप्रेषिते[2] स्रुचावादाय समिधो यज इति प्रथमे संप्रेष्यति । यज यज इत्युत्तरान् ॥ २५ ॥ त्रीनिष्ट्वोपभृतोऽर्धं जुह्वामवनीयोत्तरौ यजति ॥ २६ ॥ पञ्च प्रयाजानपरेणाघारसंभेदँ समानत्र यजति ॥ २७ ॥ ध्रुवादीनि हवीँष्यभिघारयत्युपभृतमन्ततः ॥ २८ ॥ ज्योतिष्मत्याज्यभागौ यजत्याग्नेयमुत्तरार्धे सौम्यं दक्षिणार्धेऽग्रेणाघारसंभेदमतिक्रामम्[3] ॥ २९ ॥ प्रधानाहुतीः पूर्वां पूर्वाँ सँहिताम् ॥ ३० ॥ आग्नेयेन प्रचर्योपाँशुयाजेन[4] प्रचरति ॥ ३१ ॥ उपाँशु देवतामाहोच्चैरन्यत् ॥ ३२ ॥ सांनाय्येन समानदेवतस्य दोहयोश्च समवदाय प्रचरति ॥ ३३ ॥ पुरस्तात् स्विष्टकृतः स्रुवेण पार्वणौ होमौ जुहोति

ऋषभँ वाजिनँ वयँ पूर्णमासँ हवामहे ।
स नो दोहतांँ सुवीरँ रायस्पोषँ सहस्रिणम् ॥

पूर्णमासाय सुराधसे स्वाहा इति पौर्णमास्याम् ।[5]

अमावास्या सुभगा सुशेवा धेनुरिव पयो भूय आप्यायमाना ।
सा नो दोहतांँ सुवीरँ रायस्पोषँ सहस्रिणम् ॥

अमावास्यायै सुराधसे स्वाहा इत्यमावास्यायाम् ॥ ३४ ॥ उत्तरार्ध-

१. B, N add ऋषीन्
२. Thus B, N; CR reads संप्रेष्यति and ends the sutra.
३. B °मतिक्रामी; N °मतिक्रामन्
४. Thus emended; B, N, CR °यज्ञेन.
५. CR ends the sūtra here.

पूर्वार्धेऽग्निँ स्विष्टकृतमसँसृजन् यजति ॥ ३५ ॥ आयतने स्रुचौ सादयति ॥ ३६ ॥

॥ इतीष्टिसूत्रे तृतीयेऽध्याये[1] चतुर्थं खण्डम् ॥

आग्नेयं[2] मध्यादधिहत्याङ्गुष्ठेनोपमध्यमया[2] च यवमात्रं प्राशित्रमवद्यति ॥ १ ॥ अनुपस्तृणन्नभिघार्याग्रेणोत्तरँ वेद्यँसमप उपनिनीय व्युह्यौषधीः सादयति[3] ॥ २ ॥ सर्वेषाँ हविषां[3] द्विर्द्विरिडाँ समवदाय सादयति ॥ ३ ॥ आग्नेयस्य दक्षिणार्धादवदाय पूर्वार्धादणु दीर्घँ यजमानभागमवद्यति ॥ ४ ॥ मध्यात् संभिन्दन् द्वितीयामिडाम्[4] ॥५॥ अग्रेण हवीँषि पश्चार्धेन स्रुचः परिहृत्य प्रत्यङ्मुख आसीनो होत्र इडां प्रयछति ॥ ६ ॥ अग्रेण होतारमपरेणेडां दक्षिणातिक्रम्यानतिक्रम्य वा होतुरङ्गुलिपर्वणी अनक्त्यपरं पूर्वम् ॥ ७ ॥ इडाया होत्रेऽवान्तरेडाँ हस्तेऽवद्यति होता पूर्वमध्वर्युरुत्तरम् ॥८॥ अध्वर्युराग्नीध्रो ब्रह्मयजमानावित्यन्वारभन्ते ॥ ९ ॥ उपहूतायामिडायां दक्षिणतः परीतोत्तरतः परीत इति संप्रेष्यति ॥ १० ॥ यजमानपञ्चमा ऋत्विजो व्यतिक्रम्य भक्षयित्वेडां प्रस्तरे मार्जयन्ते

मनो ज्योतिर्जुषतामाज्यस्य विच्छिन्नँ यज्ञँ समिमं दधातु ।
बृहस्पतिस्तनुतामिमं नो यज्ञँ विश्वे देवा इह मादयन्ताम् ॥

इति ॥११॥ व्युद्दिष्टस्य द्वैधमाग्नीध्रभागं पृथक्पाण्योरवद्यति[5] ॥१२॥ उपहूता पृथिवी मातोप मां[6] पृथिवी माता ह्वयतामग्निराग्नीध्रात् स्वाहा ॥ उपहूतो द्यौः पितोप मां[6] द्यौः पिता ह्वयतामग्निराग्नीध्रात् स्वाहा इत्युपहूय

१. B, N omit.
२. B अग्नेयंमध्या°; N आग्नेयँ मध्यादधिहृत्या°; CR आग्नेयमध्यादधिहृत्या°
३. Thus CR emended; B, N सर्वेषाँ युदयति हविषां
४. B, N °मिडायां
५. CR reads sūtras 12 and 13 as one sūtra.
६. B, N मा.

पृथिव्यास्त्वा दात्रा प्राश्नाम्यन्तरिक्षस्य त्वा दात्रा प्राश्नामि दिवस्त्वा दात्रा प्राश्नामि दिशां त्वा दात्रा प्राश्नामि इति प्राश्नाति ॥ १३ ॥ वेदेन ब्रह्मभागयजमानभागावग्रेणाहवनीयं परिहृत्य दक्षिणतः प्राशित्रहरणेऽन्तर्वेदि ब्रह्मभागँ सादयत्यपरं बहिर्वेदि यजमानभागम् ॥ १४ ॥ अन्वाहार्यमनु हवीँष्युद्वासयति ॥ १५ ॥ अनुयाजसमिधमादायाह ब्रह्मन् प्रस्थास्यामः। समिधमाधायाग्नीत्परिधीँश्चाग्निं च सकृत्सकृत् संमृड्ढि इति संप्रेष्यति ॥ १६ ॥ इध्मसंनहनैः संमार्ष्टि आर्जिं त्वाग्ने ससृवाँसँ सनिँ ससनिवाँसँ वाजं जिगिवाँसं देवेभ्यो हव्यमूहिवाँसँ[1] वाजिनं त्वा वाजजितँ संमाज्र्म्यग्ने वाजमजैषीः इति ॥ १७ ॥ विस्रस्याभ्युक्ष्य संमार्गानिग्नावनुप्रहरति

यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा ।
पशूनस्माकं मा हिँसीरेतदस्तु हुतं तव स्वाहा ॥

इति ॥१८॥ औपभृतं जुह्वामवनीय[2] त्रीननुयाजान् यजति देवान् यज इति प्रथमे यज यज इत्युत्तरौ ॥ १९ ॥ समिध्यपरमपरमिष्ट्वोत्तमेनेतरावनुसंभिद्यायतने स्रुचौ सादयति ॥ २० ॥

॥ इतीष्टिसूत्रे तृतीयेऽध्याये[3] पञ्चमं खण्डम् ॥

वाजस्य मा इति जुहूँ सहप्रस्तरामुद्गृह्णाति । अथा सपत्नानिन्द्रो मे इत्युपभृतमवगृह्णाति । उद्ग्राभश्च इति जुहूम् । निग्राभश्च इत्युपभृतम् । अथा सपत्नानिन्द्राग्नी मे इति विषूची करोति ॥ १ ॥ अग्नेरुज्जितिमनूज्जेषम् इति प्राचीं जुहूं प्रकर्षति ॥ २ ॥ देवस्तँ सविता प्रतिनुदतु यो अस्मान् द्वेष्टि यं च वयं द्विष्मः इत्युपभृतं प्रतीचीं बहिर्वेदि निरस्यति ॥ ३ ॥ अभ्युक्ष्य प्रत्यासादयति ॥ ४ ॥ जुह्वा परिधीननक्ति ।

१. B, N हव्यमुहि°
२. Thus N; CR जुह्वामानीय cf. VārŚS I 3.4.26
३. B, N omit

वसुरसि इति मध्यमम् उपावसुः इति दक्षिणँ विश्वावसुः इत्युत्तरम् ॥ ५ ॥ संजानाथां द्यावापृथिवी इति बर्हिषि विधृती विसृज्य प्रस्तरमनक्ति । पृथिव्यामङ्क्ष्व इति ध्रुवायां मूलम् अन्तरिक्षेऽङ्क्ष्व इत्युपभृति मध्यं दिव्यङ्क्ष्व इति जुह्वामग्रम् ॥ ६ ॥ प्रत्यवरोहैः पुनरक्त्वा आयुषे त्वा इति प्रस्तरात्तृणमपादाय मूलैः प्रतिष्ठाप्य प्रस्तरमासीन आश्राव्य प्रत्याश्रुत आह इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि इति संप्रेष्यति ॥ ७ ॥ अस्यामृधेद्धोत्रायाम्[1] इत्युच्यमाने सहशाखं प्रस्तरमग्नावनुप्रहरति ॥ ८ ॥ अप्तुभीरिहाणाः इति नियतं प्राञ्चमनुप्रहृत्यैनानन्ववसृजति[2] ॥९॥ अग्नीद्गमय इति संप्रेष्यति ॥ १० ॥ आग्नीध्रस्त्रिः पाणिना गमयति ॥ ११ ॥ अनुप्रहर सँवदस्व इत्याग्नीध्रः संप्रेष्यति ॥ १२ ॥ अहीनः प्राणः इत्युपाँशु तृणमनुप्रहरति ॥ १३ ॥ एतद् इति त्रिरङ्गुल्यानुदिशति ॥१४॥ आयुर्धा अग्नेऽसि इति यथारूपं गात्राणि संमृशति ॥ १५ ॥ ध्रुवासि इति पृथिवीमभिमृश्याचिरालभ्य चक्षुषी आलभते[3]

पुनर्यमश्चक्षुरदात् पुनरग्निः पुनर्भगः ।
पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योः ॥

इति ॥ १६ ॥ अपः स्पृष्ट्वा मध्यमं परिधिमन्वारभ्याह अगा ३ नग्नीत् इति । अगन् इत्याग्नीध्रः । श्रावय इत्यध्वर्युः । श्रौषट् इत्याग्नीध्रः प्रत्याश्रावयति ॥ १७ ॥ स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शँयोर्ब्रूहि इति संप्रेष्यति ॥ १८ ॥

यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः ।
तं त एतमनु जोषं भरामि नेदेष युष्मदपचेतयातै ॥

इति परिधीननुप्रहरति ॥ १९ ॥ उपकर्षत्युत्तरार्ध्यम्[4] ॥ २० ॥

---

१. B, N अस्यामृधेहोत्रायां

२. Thūs emended; B, N °त्येनान्वव°; CR° त्यैनान्यवसृजति

३. Thus B; N आलभेता; CR आलभेत

४. B, N °त्युत्तरार्धं

जुह्वामुपभृतमाधाय सँस्रावभागाः स्थ इति परिधीनुपहुत्य[1] स्रुचौ विमुञ्चति ॥ २१ ॥ अग्नेर्वामपन्नगृहस्य[2] सदसि सादयामि इति हविर्धानस्य[3] कस्तम्भदेशे स्रुचौ सादयति ॥२२॥ घृताची यजमानस्य धुर्यौ पातम्[4] इति धुरोरपकर्षति[5] वेद्यँसयोर्वा ॥ २३ ॥ न विमुक्ते बर्हिषि प्रत्यासादयति ॥ २४ ॥

॥ इतीष्टिसूत्रे तृतीयेऽध्याये[6] षष्ठं[7] खण्डम् ॥

जुहूँ वेदोपयामामध्वर्युरादाय[8] प्रत्यक् क्रामति सहस्रुवामाज्यस्थालीँ होता स्फ्यमाग्नीध्रः ॥ १ ॥ गार्हपत्ये पत्नीः सँयाजयन्ति ॥ २ ॥ अपरो होता दक्षिणतोऽध्वर्युरुत्तरत[9] आग्नीध्रः ॥ ३ ॥ पश्चार्धे होतासीनो[10] ध्वानेन पत्नीः सँयाजयति[10] ॥४॥ उत्तरार्धे सोमँ यजति दक्षिणार्धे त्वष्टारम् ॥ ५ ॥ परिश्रिते देवानां पत्नी राकाँ सिनीवालीमिति यजति ॥ ६ ॥ पुरस्ताद्देवपत्नीनां पशुकामस्य सिनीवालीँ यजत्युपरिष्टाद्राकाँ वीरकामस्य ॥ ७ ॥ सं पत्नी पत्या इति पत्नीमन्वारभ्य स्रुवेण जुहोति

१. Thus N; B °नुपहृत्य; CR परिधीनभिहुत्य
२. Thus B; N, CR, MS I. 3.1 अग्नेर्वोपन्न°
३. Thus emended; B, N, CR हविर्धानं च
४. Thus B, N; cf. MānŚS I 3.4.28; CR पाताम्
५. Thus B, N; CR धुरोपकर्षति
६. B, N omit
७. N षष्ठमं
८. Thus emended; N वेदोपयामान°, CR वेदोपयामम°
९. Thus B, N; CR दक्षिणोऽध्वर्युरुत्तर
१०-१०. Thus emended; B, N होता पत्न्यासीनाध्वनः सना भवति; CR reads sūtras 2–4 as sūtras 2–3 as follows: गार्हपत्ये पत्नीः सँयाजयन्त्यपरो होता दक्षिणोऽध्वर्युरुत्तर आग्नीध्रः पश्चार्धे होतुः पत्नी ॥ २ ॥ आसीना ध्वनः सना भवति ॥ ३ ॥

आरभेथामनुसँरभेथाँ समानं पन्थामपथा घृतस्य ।
यद्वां परिविष्टँ यदग्नौ तस्य क्लृप्त्यै दम्पती अनुसँरभेथाँ स्वाहा ॥

इति ॥ ८ ॥ उत्तरार्धपूर्वार्धेऽग्निं गृहपतिम् ॥ ९ ॥ चतुरिडामवद्यति षट्कृत्वोऽग्नीधे[1] ॥ १० ॥ प्रत्यवरोहेणाङ्गुलिपर्वणी अनक्ति प्रत्यवरोहेणाग्नीध्र उपह्वयते ॥ ११ ॥ व्याख्यातं भक्षणम् ॥ १२ ॥ इध्मपरिवासनान्युपसमाधाय दक्षिणाग्नौ चतुर्गृहीत आज्ये फलीकरणान्यावापं जुहोति अग्नेऽदब्धायोऽदब्धतनो पाहि मा दिवः पाहि प्रसित्याः[2] पाहि स्विष्टयाः[3] पाहि[3] दुरिष्टचाः पाहि दुरद्मन्या अविषं नः पितुं कृधि सुषीँ योनिँ सुषदां पृथिवीँ स्वाहा इति ॥ १३ ॥ इन्द्रोपानस्यकेहमनसो वेशान् कृधि सुमनसः सजातान्[4] स्वाहा इति द्वितीयां ग्रामकामस्य ॥ १४ ॥

उलूखले मुसले यत्कपाल उपलायां दृषदि धारयिष्यति ।
अवपृषो[5] विप्रुषः सँयजामि विश्वे देवा हविरिदं जुषन्ताँ स्वाहा ॥

इति पिष्टलेपम् ॥ १५ ॥ या सरस्वती वेशयमनी ॥ या सरस्वती वेशभगीना इत्याज्याहुती ॥ १६ ॥ होता पत्न्यै वेदं प्रयछति वेदोऽसि वित्तिरसि विदेयं प्रजाम् ॥ कर्मासि करणमसि क्रियासँ सुकृतम् ॥ सनिरसि सनितासि सनेयं पशून् इति त्रिः प्रतिमन्त्रम् ॥ १७ ॥ उपस्थ आस्यते[6] ॥ १८ ॥

इमँ विष्यामि वरुणस्य ग्रन्थिँ यज्जग्रन्थ सविता सत्यधर्मा ।
ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टाहँ[7] सह पत्या भूयासम् ॥

इति शुल्वँ विस्रस्य वेदमञ्जलिनाधस्ताद्योक्त्रमुपयछति ॥ १९ ॥

---

१. B, N °ग्नीध्रे
२. B, N प्रसृप्त्याः
३. Thus N; CR omit
४. B, N सुजाताँ
५. B, N अविप्रुषो
६. CR reads sūtras 17 and 18 as one satra,
७. B, N °रिष्टाहवीँ

पूर्णपात्रे पत्नीँ वाचयति यथा याजमानम् ॥ २० ॥ समायुषा इत्यन्ततः पूर्णपात्रस्य जपति ॥ २१ ॥ प्रायश्चित्ताहुतीर्जुहोति[1] । इष्टेभ्यः स्वाहा ॥ स्विष्टेभ्यः स्वाहा[2]॥ वषडनिष्टेभ्यः[2] स्वाहा[3]॥ भेषजं[3] दुरिष्टेभ्यः स्वाहा ॥ इष्टचै स्वाहा ॥ स्विष्टचै स्वाहा ॥ निष्कृत्यै स्वाहा ॥ निष्कृत्यै दुरिष्टचै स्वाहा ॥ दुराद्धचैँ स्वाहा ॥ दैवीभ्यस्तनूभ्यः स्वाहा ॥ मानुषीभ्यः स्वाहा ॥ अतिरिक्तं न्यूने जुहोमि स्वाहा ॥ न्यूनमतिरिक्ते जुहोमि स्वाहा ॥ समँ समे जुहोमि स्वाहा ॥ भूः स्वाहा ॥ भुवः स्वाहा ॥ स्वः स्वाहा ॥ भूर्भुवः स्वः स्वाहा इति ॥ २२ ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥ मनो ज्योतिः ॥ त्रयस्त्रिँशत्तन्तवः ॥ अयाश्चाग्नेऽसि इति च ॥ २३ ॥

आश्रावितमत्याश्रावितँ वषट्कृतमवषट्कृतमत्यनूक्तमननूक्तं[4] च यज्ञे ।
अतिरिक्तं कर्मणो यच्च हीनमग्निष्टानि प्रयुजन्नेतु कल्पयन् स्वाहा ॥ २४ ॥

अनाज्ञातँ यदाज्ञातँ यज्ञस्य क्रियते मिथु ।
सर्वँ तदग्ने कल्पय त्वँ हि वेत्थ यथायथँ स्वाहा ॥

इति ॥ २५ ॥

इष्टिश्च स्विष्टिश्च ये यज्ञमभिरक्षतः ।
प्रजामन्या नः पातु यज्ञमन्याभिरक्षतु स्वाहा ॥

इति ॥ २६ ॥

यन्नो गृहाद्भयमागादबुद्धँ[5] यद्देवतः पितृतो यन्मनुष्यतः ।
अग्निर्यविष्ठः प्रणुदातु तद्भयँ शं नः प्रजाभ्यः शमु नः पशुभ्यः स्वाहा ॥

---

१. B, N हुतिं जुहोति; CR reads sūtras 22–27 as one sūtra.
२. CR स्वाहा वषट् । अनिष्टेभ्यः ।
३. CR स्वाहा भेषजम्
४. Thus N; CR °मननूक्तमत्यनूक्तं
५. Thus B, N; CR गृहं भय°

इति ॥ २७ ॥ आज्यस्थाल्या ध्रुवामाप्याययति

आप्यायतां ध्रुवा घृतेन यज्ञिया यज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदितेरुपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ॥

इति ॥ २८ ॥....[१]

[ ॥ इतीष्टिसूत्रे तृतीयेऽध्याये सप्तमं खण्डम् ॥ ]

[ ॥ इति तृतीयोऽध्यायः ॥ ]

१. Lacuna in B, N

# आधानम्

पौर्णमास्याममावास्यायाँ वा वसन्ते ब्राह्मण आदधीत । ग्रीष्मे राजन्यः शरदि वैश्यो वर्षासु रथकारः ॥ १ ॥ सार्ववर्णिकँ शिशिरम् ॥ २ ॥ ऋतुनक्षत्रपर्वसंनिपात आदधीत ॥ ३ ॥ सर्वदा[1] सोमेन यक्ष्यमाणः ॥ ४ ॥ केशश्मश्रु वापयित्वा क्षौमे आछाद्योपवत्स्यदशनमश्नीतः[2] ॥ ५ ॥ देवयजनस्य त्रीनुदीचो वँशान् कृत्वाग्रेण मध्यमँ वँशमपराह्णे प्राचीनप्रवण औपासनमाधायाभिजुहोति

प्र वेधसे कवये वेद्याय वचो वन्दारु वृषभाय वृष्णे ।
यतो भयमभयं तन्नो अस्त्वव देवानाँ यजे हेड्यानि स्वाहा ॥

इति । कूष्माण्डैश्च ॥ ६ ॥ तस्मिन्निशायां ब्रह्मौदनँ श्रपयत्यानडुहे चर्मण्यवहत्य चतुःशरावं चतुर्षूदपात्रेषु पयसि वा जीवतण्डुलम् ॥ ७ ॥ उद्धृत्याभ्याज्यं कृत्वा तं चत्वार ऋत्विज आर्षेयाः सकृदवदाय प्राश्नन्ति ॥ ८ ॥ तेभ्यो वरं ददाति ॥ ९ ॥ शेषे तिस्रः समिधः प्रादेशमात्रीरुद्गृह्यादधाति चैत्यस्याश्वत्थस्य[3] हरिणीः सहपलाशाः स्तिबिगवतीः । प्र वो वाजा अभिद्यवः इति गायत्रीभिर्ब्राह्मणस्य । आ त्वा जिघर्मि ॥ आ विश्वतः ॥ यस्ते अद्य इति राजन्यस्य । सप्त ते अग्ने ॥ जनस्य गोपाः ॥ उपक्षरन्ति सिन्धवः इति वैश्यस्य ॥ १० ॥ सँवत्सरं ब्राह्मौदनिकं[4] भृत्वाग्नीनादधीत । द्वादशरात्रं त्रिरात्रमेकरात्रँ वा ॥ ११ ॥ नानृतं वदेन्न माँसमश्नीयान्न स्त्रियमुपेयान्नास्य वासः पल्पूलनेन पल्पूलयेयुर्नास्याग्निं गृहाद्धरेयुर्नान्यत आहरेयुर्न प्रयायान्नानुगच्छेत् ॥ १२ ॥

---

१. B, N सर्वं; CR सर्वं [ त्र ]
२. Thus emended; B, N, CR °द्योपवत्समशन°
३. B, N चैतस्या°; MānŚS I 5. 1. 24 चैत्यस्या°
४. B, N ब्रह्मौ°

**यदि प्रयायादनु वा गछेदोदनं चतुःशरावं पक्त्वा समिधः पुनरादध्यात् ॥ १३ ॥ यस्तँ श्वोऽग्निमाधास्यन् स्यात्** प्रजा अग्ने **इति निशायां कल्माषमजं बध्नाति ॥ १४ ॥ अरणिपाणिर्यजमानो जागर्ति ॥ १५ ॥**

शल्कैरग्निमिन्धान उभौ लोकौ सनोम्यहम् ।
उभयोर्लोकयोर्ऋध्नोमि मृत्युं तराम्यहम् ॥

**इति शल्कैरग्निमिन्धीत ॥ १६ ॥ उपव्युषमरणी निष्टपति ॥ १७ ॥** अयं ते योनिर्ऋत्वियः **इत्यरण्योरग्निँ समारोपयति ।**

जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यति ।
अग्निमश्वत्थादधि हव्यवाहँ शमीगर्भाज्जनयन् यो मयोभूः ॥

**इति च ॥ १८ ॥** ऋत्वियवती स्थो अग्निरेतसौ रेतो धत्तं पुष्ट्यै प्रजननम् । तत्सत्यँ यद्वीरं बिभृतो वीरं जनयिष्यतः । ते मत्प्रातः प्रजनयिष्येते ते मा प्रजाते प्रजनयिष्यतः प्रजया पशुभिर्ब्रह्मवर्चसेन **इत्यरणी अभिमन्त्र्य यजमानाय प्रयछति ॥ १९ ॥**

मही विश्पत्नी सदनी ऋतस्यार्वाची एतं धरुणे रयीणाम् ।
अन्तर्वती जन्यं जातवेदसमध्वराणां जनयतं पुरोगाम् ॥

**इति प्रतिगृह्णाति ॥ २० ॥ प्रतिगृह्य वाचँ यछति** अनृतात्सत्यमुपैमि मानुषाद्दैवं दैवीँ वाचँ यछामि **इति ॥ २१ ॥ अनुगमयन्त्यग्निमुद्धरन्ति भस्म ॥ २२ ॥ ब्राह्मौदनिकलक्षणे[1] गार्हपत्यमादधाति पुरस्तादाहवनीयमष्टसु प्रक्रमेषु ब्राह्मणस्यैकादशसु राजन्यस्य द्वादशसु वैश्यस्यापरिमिते वा ॥ २३ ॥ वितृतीयमात्रे दक्षिणाग्निं दक्षिणतः पुरस्ताद्गार्हपत्यस्य ॥ २४ ॥ आधानानुपूर्व्येण[2] संभारान्निवपत्यर्धानाहवनीयलक्षणेऽर्धानितरयोः ॥ २५ ॥**

**॥ इत्याधाने चतुर्थेऽध्याये प्रथमं खण्डम् ॥**

१. B, N ब्रह्मौ°
२. Thus emended; B, N, CR °नानुपूर्वेण

उत्समुद्रान्मधुमं[1] ऊर्मिरागात्[1] साम्राज्याय व्रतरं दधानः ।
अग्नी च ये मघवानो वयं चेषमूर्जं मधुमत्संभरेम ॥

इत्यौत्समुदकम् ॥ १ ॥

यत्पर्यपश्यत्सलिलस्य मध्य उर्व्या स्थानं जगतः प्रतिष्ठाम् ।
तत्पुष्करस्यायतनाद्धिजातं पर्णं पृथिव्याः प्रथनँ हरामि ॥

इति पुष्करपर्णं निधाय इयत्यग्र आसीदतो देवी प्रथमाना पृथग्यत् इति वराहविहतम् ॥ २ ॥ वल्मीकवपां न्युप्योषान्निवप्स्यन् ध्यायति यददश्चन्द्रमसि कृष्णं तदिहास्तु इति ॥ ३ ॥

यददो दिवो यदिदं[2] पृथिव्याः समानँ योनिमभिसंबभूवथुः ।
तस्य पृष्ठे सीदतु जातवेदाः शिवः प्रजाभ्य इह राये अस्तु ॥

इति निवपति[3] ॥ ४ ॥

चन्द्रमग्निं चन्द्ररथँ हरिव्रतँ वैश्वानरमप्सुषदँ स्वर्विदम् ।
विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः ॥

इति प्रवाहसिकताः[4] ॥ ५ ॥ शर्करा निवप्स्यन् द्वेष्यं मनसा ध्यायेत् ॥ ६ ॥

अदृँहथाः शर्कराभिस्त्रिविष्टप्यजयो लोकान् प्रदिशश्चतस्रः ।

इति निवपति ॥ ७ ॥

उदेहयग्ने अधि मातुः पृथिव्या विश आविश महतः सधस्थात्[5] ।
आशुं त्वाजौ[6] दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम् ॥

इत्याखुकिरिं न्युप्य पिपीलिकाकिरिं गोष्ठात् करीषाणि लोहशकलान्यश्वत्थमुदुम्बरँ त्रिकङ्कतँ शमीमशनिहतँ वृक्षं पलाशमिति न्युप्य सँसृजति

१. B, N मधुमदूर्मि°
२. B, N यददः
३. B, N निर्वपति
४. Thus emended; B, N, CR प्रवाह्या सिकताः
५. Thus N; CR सधस्तात्
६. B, N त्वाज्रो

सँ वः सृजामि हृदयँ[१] संप्रिया[१] हृदयानि वः ।
आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम ॥

इति ॥ ८ ॥ प्रादुर्भूतेषु रश्मिषु गार्हपत्यं मथित्वादधाति[२]। उदितेऽनुदिते व्युदिते वा ॥ ९ ॥ उदित इतरौ[३] ॥ १० ॥ इतो जज्ञे इति गार्हपत्यलक्षणेऽरणी आधायाभिमन्त्रयते[४] ॥ ११ ॥ दशहोत्रारणी[४] समवदधाति ॥ १२ ॥ चित्तिः स्रुक् इत्यनुवाकँ यजमानँ वाचयति ॥ १३ ॥ यो नो अग्निः ॥ मयि गृह्णामि इति मथिष्यन्नुपति ॥ १४ ॥ सहाग्नेऽग्निना जायस्व सह रय्या सह पोषेण सह प्रजया सह ब्रह्मवर्चसेन इति मन्थति ॥ १५ ॥ जातमभिप्राणिति प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेण इति ॥ १६ ॥ जाते वरं ददाति ॥ १७ ॥

अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिँ वीलुजम्भम् ।
दश स्वसारो अग्रुवः समीचीः पुमाँसं जातमभिसँरभन्ताम् ॥

इत्यादत्ते ॥ १८ ॥ उपास्यति ब्रह्मा दक्षिणत आसीन उत्तरतो हिरण्यशकलम् ॥ १९ ॥ अतिप्रयच्छति[५] यजमानो द्वेष्याय रजतम् ॥ २० ॥ यदि द्वेष्यो न विद्येतापविध्येत् ॥ २१ ॥ सर्वत्रोपासनातिप्रदानम्[६] ॥ २२ ॥ आधानमन्त्रान्निगद्योपस्थकृत आदधाति ॥ २३ ॥ आयं गौः इति सार्पराज्ञी[७] ॥ २४ ॥

॥ इत्याधाने चतुर्थेऽध्याये द्वितीयं खण्डम् ॥

१. B, N omit.
२. CR मथित्वा दधाति
३. CR extends sūtra 9 upto here.
४. B, N, CR आधायारणिसंभारमभिमन्त्रितँ येन कृतेऽरणिगानितरयोर्दशहोत्रारणी. A part of this sūtra seems to be a wrong repetition of I 4. 1. 25. जज्ञे by emendation cf. MS I 6. 1. B, N, CR यज्ञे
५. B, N अभि°
६. B, N °नानिप्रधानम्
७. B, N सार्पराज्ञीः

यत्पृथिव्या अनामृतँ संवभूव त्वे सचा ।
तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम् ॥

दोहृया[1] च ते इतिप्रभृतिना[1] तेन रुचा रुचमशीथाः इत्यन्तेन भूर्भुवोऽङ्गिरसां त्वा देवानाँ व्रतेनादधानि इत्याङ्गिरसो ब्राह्मण आदधीत । भृगूणां त्वा इति भार्गवः । भृग्वङ्गिरसां त्वा इति भार्गवाङ्गिरसः । आदित्यानां त्वा देवानाम् इत्यन्ये[2] ॥ १ ॥ अग्नेष्ट्वा देवस्य इति च । इन्द्रस्य त्वा इति राजन्यः । मनोष्ट्वा इति वैश्यः । ऋभूणां त्वा इति रथकारः । आछदि त्वा इति सर्वेषाम् ॥ २ ॥ उभावाधानमन्त्रान् । आदधानि इत्यध्वर्युः । आदधे इति यजमानः ॥ ३ ॥ ज्वलन्तमाधाय इषे राये रमस्व इत्यभिमन्त्र्य सारस्वतौ त्वोत्सौ प्रावताम् इत्यन्तेन अग्ना आयूँषि पवसा इति तिसृभिस्तिस्र आश्वत्थीः समिध आदधाति ॥ ४ ॥ गार्हपत्याद्दक्षिणाग्निमादधाति[3] समयाध्वं गते त्वाहवनीये ॥ ५ ॥ मथ्यमाहार्यं वा ॥६॥ भ्राष्ट्रादन्नाद्यकामस्य ॥ ७ ॥ त्रिँशद्धामा इति सार्पराज्ञी ।

यदन्तरिक्षस्यानामृतँ संवभूव त्वे सचा ।
तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम् ॥

भुवः[4] इति व्याहृतिः । यथर्थ्यध्वर्युरादधाति ॥ ८ ॥ गार्हपत्येऽग्निप्रणयनान्याधाय रथ्यमश्वं[5] पुरस्तात्प्रत्यञ्चमवस्थाप्य तस्य दक्षिणकर्णे जपति या वाजिन्नग्नेः इति ॥ ९ ॥ ओजसे बलाय त्वा इत्यग्निमुद्यछति ॥ १० ॥ शूर्पे पाँसून्न्युप्याधस्तादुपयमनीरुपयछति ॥११॥ प्राचीमनु प्रदिशम् इति प्रणयति ॥ १२ ॥ अश्वमग्रतो नयति ॥१३॥ कुल्फदघ्ने

१. १ N ह्या च त इति.°; CR इति प्रभृतिना.
२. CR reads sūtras 1–2 as one sūtra.
३. CR ends the sūtra here.
४. B, N बभूव
५. B, N रथमश्वं

हरति जानुदघ्ने नाभिदघ्नेँऽसदघ्ने कर्णदघ्ने ॥ १४ ॥ न कर्णदघ्नमत्युद्यच्छति ॥ १५ ॥ दक्षिणतो हरति समं प्राणैर्धारयमाणः ॥ १६ ॥ समयाध्वे वरं ददाति ॥ १७ ॥ प्रणीयमाने दक्षिणतो ब्रह्मा धूर्गृहीतँ रथँ वर्तयति ॥ १८ ॥ यः सपत्नवान् भ्रातृव्यवान् वा स्यात्तस्य रथचक्रेण विहारं त्रिरनुपरिवर्तयेयुः ॥ १९ ॥ अभ्यस्थाँ विश्वाः इति पुरस्तात्प्रत्यञ्चमश्वमाहवनीयलक्षणमाक्रमयति ॥ २० ॥ न पराञ्चमवसृजेत्[1] ॥ २१ ॥ 'तमनिधायैव' इति ब्राह्मणव्याख्यातम् ( मै. सं. २.६.६ ) ॥ २२ ॥ अन्तश्चरति इति सार्पराज्ञी ।

यद्दिवोऽनामृतँ संबभूव त्वे सचा ।
तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम् ॥

भूर्भुवः स्वः इति व्याहृतिः । यथर्षि । अग्ने हव्याय वोढवे इत्यन्तेन ॥२३॥ पुरस्तात्प्रत्यङ्मुखस्तिष्ठन् पार्श्वतः पदस्याधाय इषे राये रमस्व इत्यभिमन्त्र्य सारस्वतौ त्वोत्सौ प्रावताम् इत्यन्तेनाश्वेनोपघ्रापयेत् ॥२४॥ अरण्योर्निहितो जातवेदा इत्येतस्याँ साम गाय इति ब्रूयादरण्योर्निहितयोः ॥ २५ ॥ अग्निं नरो दीधितिभिरित्येतस्याँ साम गाय इति ब्रूयात् समवहितयोः ॥ २६ ॥ त्वेषस्ते धूम ऋण्वतीत्येतस्याँ साम गाय इति ब्रूयाद्धूमे ॥ २७ ॥ अदर्शि गातुवित्तम इत्येतस्याँ साम गाय इति ब्रूयाज्जाते ॥ २८ ॥ रथन्तरं गायति गार्हपत्य आधीयमाने ॥ २९ ॥ बृहदाहवनीय उद्ध्रियमाणे ॥ ३० ॥ वामदेव्यमाधीयमाने । यज्ञायज्ञियं च ॥ ३१ ॥ निहिते वारवन्तीयँ वरणपाणिर्निहिते श्यैतम् ॥ ३२ ॥ पुरस्तात्सभाया आहवनीयात् सभ्यमग्निमादधाति ॥ ३३ ॥ तस्य पश्चाच्चतुःशतमक्षान्निवपति ॥ ३४ ॥ सभ्यात्पूर्वमावसथ्यम् ॥ ३५ ॥ अग्नेर्मन्वे इत्यजँ विमुच्य वाचँ विसृज्य दक्षिणा ददाति ॥ ३६ ॥ अश्वँ वहिनं ब्रह्मणेऽध्वर्यवे वा ॥ ३७ ॥ अजमग्नीध उपबर्हणं च सर्व-

१. Thus N; CR प्राञ्च°

सूत्रम् ॥ ३८ ॥ क्षौमे[1] अध्वर्यवे[1] ॥ ३९ ॥ पुरस्ताद्विहारस्यानड्वाहं धेनुं च पश्चात्परीत्य होत्रे ॥ ४० ॥ द्विहायनमिथुनौ रथ इति सर्वेषामविनिर्दिष्टम् ॥४१॥ षड्द्वादशचतुर्विंशत्यपरिमितगवाँ संख्याविकल्पः ॥ ४२ ॥ अनृतवदनं ब्राह्मणस्योपवासनँ[2] स्वकृत इरिणेऽवसानमन्तर्नाव्युदकाचमनमृबीसपक्वाशनं क्लिन्नकाष्ठाभ्याधानमिति वर्जयेत् ॥ ४३ ॥ अग्नीनुपतिष्ठते यजमानः ॥ ४४ ॥

॥ इत्याधाने चतुर्थेऽध्याये तृतीयं खण्डम् ॥

पशून्मे शँस्य पाहि इत्याहवनीयं प्रजां मे नर्य पाहि इति गार्हपत्यम् अन्नं मे बुध्य पाहि इति दक्षिणाग्निँ सप्रथः सभां मे पाहि इति सभ्यम् अहिर्बुध्न्य मन्त्रं मे पाहि इत्यावसथ्यम् ॥ १ ॥ आहवनीये नानावृक्षीयाः समिध आदधाति । ताँ सवितुर्वरेण्यस्य इति शमीमयीँ विधेम ते इति वैकङ्कतीं प्रेद्धो अग्ने इत्यौदुम्बरीम् ॥ २ ॥ या ते अग्ने पवमाना पशुषु प्रिया तनूर्या पृथिव्याँ याग्नौ या रथन्तरे या गायत्रें छन्दसीदं ते तामवरुन्धे तस्यै ते स्वाहा ॥ या ते अग्ने पावकाप्सु प्रिया तनूर्यान्तिरिक्षे या वाते या वामदेव्ये या त्रैष्टुभे छन्दसीदं ते तामवरुन्धे तस्यै ते स्वाहा ॥ या ते अग्ने सूर्ये शुचिः प्रिया तनूर्या दिवि यादित्ये या बृहति[3] या[3] स्तनयित्नौ या जागते छन्दसीदं ते तामवरुन्धे तस्यै ते स्वाहा इति तिस्र आहुतीः ॥ ३ ॥ समुद्रादूर्मिः इति तिसृभिस्तिस्रः शमीमयीर्घृताक्ताः समिध आदधाति ॥ ४ ॥ ये अग्नयः समनसः इत्यौदुम्बरीमनक्ताम् ॥५॥ क्षुच्च सेदिश्च स्निहितिश्च सदान्वा चानामतिश्चानाहुतिश्च निर्ऋतिरेतास्ते अग्ने तन्वो वर्तिमतोस्तास्तं गच्छन्तु यं द्विष्मः इति द्वेष्यं मनसा ध्यायन् यजमानो जपति ॥ ६ ॥ चतुर्गृहीतमाज्यं पूर्णाहुति-

१. Thus emended. cf. MS I 6. 4; N क्षौमिद°; CR क्षौममिदम°
२. B, N °पधासनं
३. B, N बृहस्पतिर्या

मग्रेणाहवनीयं गत्वोदङ्ङावृत्य सप्त ते अग्ने इति जुहोति ॥ ७ ॥ हुतायां धेनुं ददाति ॥ ८ ॥ ये अग्नयो दिवः इति द्वितीयाम् ॥ ९ ॥ प्रतिपरीत्य सम्राट् च स्वराट् च इति पर्यायैराहवनीयमुपस्थायाग्नेयमष्टाकपालं निर्वपति ॥ १० ॥ उपसन्ने[1] हविष्यप्रोक्षिते[2] निषसाद धृतव्रतः इति समुह्याक्षान्[3] हिरण्यं निधाय मध्याधिदेवने राजन्यस्य जुहुयात् ॥ ११ ॥ गामस्य तदहः सभायाँ विदीव्येयुः[4] ॥ १२ ॥ तत्र शतमक्षान् यजमानाय प्रयच्छति ॥ १३ ॥ तत्कृतं विचिनुयात् ॥ १४ ॥ अहिँसन्तः परूँषि विशँस्युः ॥१५॥ ताँ सभासद्भ्य उपहरेत् ॥ १६ ॥ तया यदन्नं जयेत्तद् ब्राह्मणेभ्यो दद्यात् ॥ १७ ॥ उत[5] नोऽहिर्बुध्न्यः इति सभ्यावसथ्ययोर्जुहोति ॥ १८ ॥ प्र नूनं ब्रह्मणस्पतिः इति हिरण्यं निधाय मध्ये परिषदः ॥ १९ ॥ घर्मः शिरः इति गार्हपत्यमुपतिष्ठते अर्को ज्योतिः इति दक्षिणाग्निँ वातः प्राणः इत्याहवनीयम् ॥ २० ॥ अविषं नः पितुं पच इति सर्वत्रानुषजेत् ॥ २१ ॥ कल्पेतां द्यावापृथिवी इति क्लृप्तिसामनसीभ्याँ विहारम् ॥ २२ ॥ समाप्येष्टिमग्नये पवमानायाष्टाकपालं निर्वपेत् ॥ २३ ॥ त्रिँशन्मानँ हिरण्यं दक्षिणा ॥२४॥ द्विहविषं द्वितीयम्[6] ॥२५॥ अग्नये पावकायाग्नये च शुचयेऽष्टाकपालौ ॥ २६ ॥ त्रिँशन्मानं पूर्वस्य दक्षिणा चत्वारिँशन्मानमुत्तरस्य ॥ २७ ॥ चतुर्हविषमुत्तमम्[7] ॥ २८ ॥ आग्नावैष्णवमेकादशकपालं निर्वपेद्विष्णवे च शिपिविष्टाय त्र्युद्धौ घृते चरुमदित्यै घृते चरुमग्नीषोमीयमेकादशकपालम् ॥ २९ ॥ सद्यो निर्वपेद् द्वादशाहे

१. B, N उपवसन्ने
२. B, N add जुहोति.
३. Thus N; CR समूह्या°
४. B, N चिदिव्येयुः
५. Thus N; CR उतो.
६. CR reads sūtras 25-26 as one sutra, cf. sūtra 28 next
७. Thus N; CR चतुर्विँशमुत्तमम्

सँवत्सरे वा ॥ ३० ॥ सोमेनायक्ष्यमाणस्योत्तरासां तिसृणाँ विकल्पः ॥ ३१ ॥ फलीकृतानां पूषा वः इति चरव्याँस्तण्डुलानावपति ॥३२॥ ध्रुवमसि[1] इति[1] प्रथमेन कपालमन्त्रेण चरुमुपदधाति ॥ ३३ ॥ मेक्षणेन द्वितीयाँ स्विष्टकृतः पञ्चावदानस्य चरोरवद्यति ॥ ३४ ॥ शँय्वन्तेऽग्रेणाहवनीयमादित्यं ब्रह्मणे परिहरेयुः ॥ ३५ ॥ तं चत्वार ऋत्विज आर्षेया द्वौ द्वौ सह प्राश्नन्ति ॥ ३६ ॥ तेभ्यः साण्डँ वत्सतरं ददाति धेनुं च ॥३७॥ द्वादशरात्रमजस्रेष्वग्निष्वाज्येनाग्निहोत्रं जुहुयात् ॥३८॥ पूर्वस्मिन् पर्वणीष्टिपशुबन्धानां कालः ॥ ३९ ॥ पौर्णमास्यारम्भणौ दर्शपूर्णमासौ ॥ ४० ॥ पौर्णमास्यामादधानः पूर्वां पौर्णमासीमग्न्याधेयायोपवसेदुत्तरामन्वारम्भणीयायै पौर्णमासीं च ॥ ४१ ॥ उपवसथेऽन्वारम्भणीयायाः सप्ताहुतीर्जुहोति[2]

निवेशनी संगमनी वसूनाँ विश्वा रूपाणि वसून्यावेशयन्ती ।
सहस्रपोषँ सुभगे रराणा सा न आगाद्वर्चसा सँविदाना ॥

इति ।

अग्नीषोमौ प्रथमौ वीर्येण वसून् रुद्रानादित्यानिह जिन्वताम् ।
माध्यँ हि पौर्णमास्यं जुषेतो ब्रह्मणा वृद्धौ सुकृतेन स्याताम् ॥
अथास्मभ्यँ सर्ववीरँ रयिं नियच्छतम् ॥

इति । पार्वणौ च होमौ । या सरस्वती वेशयमनी ॥ या सरस्वती वेशभगीना इति । चतुर्होत्रा च मनसा[3] ॥ ४२ ॥ आग्नावैष्णवमेकादशकपालं निर्वपेदग्नये च भगिनेऽष्टाकपालँ यः कामयेत भग्यन्नादः स्यामिति[4] । सरस्वत्यै चरुः सरस्वते द्वादशकपाल इति हवीँषि ॥ ४३ ॥ पुरस्तात् स्विष्टकृतो जयैर्जुहोति ॥ ४४ ॥ आकूताय स्वाहा-

१. B ध्रुवोसीति; N धृवोसीति
२. Thus N; CR सप्ताज्याहुती°. cf. VārŚS I. 4.4.3; 6.3.27
३. The punctuation here clearly defines the seven mantras for the seven offerings. It is not so in CR.
४. CR breaks the sūtra here.

कूतये स्वाहा इति द्वादश पर्यायाः ।। ४५ ।। प्रजापतिः प्रायच्छत् इति त्रयोदशीम् ।। ४६ ।। अग्ने बलद इति चतुर्दशी ँ यः कामयेत चित्रमस्यां जनतायाँ स्यामिति[१] । चित्रमस्यां भवति ।। ४७ ।। मिथुनौ गावौ दक्षिणा ।। ४८ ।।

इत्याधाने चतुर्थेऽध्याये चतुर्थं खण्डम् ।।

।। इति[२] चतुर्थोऽध्यायः ।।

१. CR breaks the sutra here.
२. B, N add प्राक्सौमिके

# पुनराधेयम्

यस्य[1] गार्हपत्याहवनीयावनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं कुर्वीतात्मना वा यत्र विधुरत्वं नीयादरणिनाशे वा समारूढेष्वग्निषु नष्टाग्नेः ॥ १ ॥ उत्सादनीयामिष्टिं निर्वपत्यग्नये वैश्वानराय द्वादशकपालम् ॥ २ ॥ पुरस्तात् स्विष्टकृत उत्सादनीयान् होमाञ्जुहोति या ते अग्न उत्सीदतः पवमाना पशुषु प्रिया तनूस्तया सह पृथिवीमारोह गायत्रेण च छन्दसा ॥ या ते अग्न उत्सीदतः पावकाप्सु प्रिया तनूस्तया सहान्तरिक्षमारोह त्रैष्टुभेन च छन्दसा ॥ या ते अग्न उत्सीदतः सूर्ये शुचिः प्रिया तनूस्तया सह दिवमारोह जागतेन च छन्दसा इति ॥ ३ ॥ ज्वलत उत्साद्य सँवत्सर आदधीत ॥ ४ ॥ रोहिण्यनूराधा[2] पुनर्वसुस्तेषामेकस्मिन् वर्षासु शरदि वा पर्वण्यादधीत ॥ ५ ॥ सर्वं पुनराधेये यथाग्न्याधेय इष्टिवर्जम्[3] ॥ ६ ॥ संभारान्न्युप्योपोलपान् दर्भान्निवपति ॥ ७ ॥ सार्पराज्ञीभिर्गार्हपत्यं नित्येन चादधाति ॥ ८ ॥ आहितानुपोलपैर्दर्भैरग्नीन् समिन्धे यजमानः । यत्त्वा क्रुद्धः परोवप[4] इति गार्हपत्यं यत्ते मन्युपरोप्तस्य इति दक्षिणाग्निं यत्ते भामेन विचकर[5] ॥ पुनस्त्वादित्याः इत्याहवनीयम् ॥९॥ पुरस्तात् पूर्णाहुतेः संततिहोमाञ्जुहोति । त्रयस्त्रिँशत्तन्तवः इति पञ्चभिः पञ्चाहुतीः ॥ १० ॥ आग्नेयमष्टाकपालं निर्वपेत् पञ्चकपालँ वा ॥ ११ ॥ पुनरूर्जा निवर्तस्व इति पुरस्तात् प्रयाजानां जुहुयात् । सह रय्या निवर्तस्व इत्युपरिष्टादनुयाजानाम् ॥ १२ ॥ अग्नाग्ने, अग्नावग्ने, अग्निनाग्ने, अग्निमग्ने, देवेऽग्नौ, देवोऽग्निः इति

१. B, N अस्य
२. CR joins this to the next word.
३. Thus N; CR इष्टिवर्गम्
४. CR परोवाप.
५. CR विचकार

विभक्तयः ॥ १३ ॥ तासाँ होता चतुर्षु प्रयाजेषु चतस्रो विदधाति द्वयोरनुयाजयोर्द्वे ॥ १४ ॥ सर्वमाग्नेयं कुर्वन्त्युपाँश्वोत्तमादनुयाजात् ॥ १५ ॥ पुरस्तात् स्विष्टकृतः सलिलः सलिगः[१] इत्यादित्यनामानि जुहोति ॥ १६ ॥ पुनरुत्स्यूतँ वासो दक्षिणा पुनर्नवो रथः पुनरुत्सृष्टोऽनड्वान् शतमानँ हिरण्यम् ॥ १७ ॥ उभयीर्दक्षिणा ददाति ॥ १८ ॥ समाप्येष्टिमाग्निवारुणमेकादशकपालं निर्वपेत् ॥ १९ ॥ तृतीयाधेयेऽग्न्याधेयेऽग्नीनाधायोपरिष्टात्[२] पूर्णाहुतेरादित्यनामानि जुहोति ॥ २० ॥

॥ इति पुनराधेये[३] पञ्चमेऽध्याये[४] प्रथमं खण्डम् ॥

---

१. N, CR सलीग
२. CR °ग्निमाधायोप°
३. B, N पुनराधेये; CR पुनराधाने
४. B, N omit.

# अग्निहोत्रम्

सायं प्रातरग्निहोत्राय गार्हपत्यादाहवनीयं ज्वलन्तं प्रणयेत् ॥ १ ॥ गृह्णीयाद्वा नक्तम् ॥ २ ॥ वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा[1] मनसा ब्रह्मणा[1] श्रोत्रेणाग्नीध्रेणैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि[2] इत्युद्धरति ॥ ३ ॥

उद्धृत उद्धर पाप्मनो[3] मा यदविद्वान् यच्च विद्वाँश्चकार ।
अह्ना यदेनः कृतमस्ति पापँ सर्वस्मादुद्धृतो मा पाप्मनो
मुञ्च तस्मात् ॥

इत्यपराह्णे । रात्र्या यदेनः कृतमस्ति इति प्रातः ॥ ४ ॥

अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै ।
तेनाग्ने काममिमं जयामसि प्रजापतिर्यः प्रथमो
जिगायाग्निमग्नौ स्वाहा ॥

इत्यपराह्णे । सूर्यमग्नौ स्वाहा इति प्रातः ॥ ५ ॥ गतश्रियो नित्यधारणमाहवनीयस्य यथाकाम्यगतश्रियः ॥ ६ ॥ प्रदोषमग्निहोत्रं जुहुयान्नक्षत्रं दृष्ट्वानस्तमिते वा ॥ ७ ॥ व्युछन्त्यां प्रातर्व्युष्टायामुदितेऽनुदिते वा ॥ ८ ॥ सायमारम्भणमग्निहोत्रं प्रातरपवर्गम्[4] ॥ ९ ॥ अरत्निमात्री वैकङ्कत्यग्निहोत्रहवणी स्थाल्यार्यकृत्यूर्ध्वकपालाचक्रवृत्ता ॥ १० ॥ तस्यां दोहयति दक्षिणतोऽन्येन शूद्रादुदीचीमवस्थाप्य ॥ ११ ॥ पूर्वौ स्तनौ ज्येष्ठस्य ज्यैष्ठिनेयस्य वा गतश्रियो वा । अपरौ कनिष्ठस्य कानिष्ठिनेयस्य बुभूषतो वा । सर्वानितरेषाम्

१. B, N मनसाध्वर्युणा
२. B, N °र्दिव्यै°
३. Thus N; CR पाप्मानं
४. Thus emended, cf. BaudhŚS 24.30. B, N, CR प्रागपवर्गम्

॥ १२ ॥ **अनुसंमृशति** ॥ १३ ॥ अग्ने शुन्धस्व **इत्याहवनीयं परिसमूहति** अग्ने गृहपते शुन्धस्व **इति गार्हपत्यम्** अग्ने वह्ने शुन्धस्व **इति दक्षिणाग्निम्** ॥ १४ ॥ **अग्नीन् परिस्तीर्य यजमानाहृतं महान्तमिध्ममुपसमाधाय पर्युक्षेत्** । ऋतसत्याभ्यां त्वा पर्युक्षामि **इति सायम्** । सत्यऋताभ्यां त्वा पर्युक्षामि **इति प्रातः** ॥ १५ ॥ **संततामुदकधारां स्रावयति गार्हपत्यादध्याहवनीयात्** यज्ञस्य संततिरसि यज्ञस्य त्वा संततये नयामि **इति** ॥ १६ ॥ अपोढं जन्यं भयमपोढाः सेना अभीत्वरीः **इति गार्हपत्यादुदीचोऽङ्गारानपोह्याधिश्रयति**

इडायास्पदं घृतवच्चराचरमग्ने हविरिदं जुषस्व ।

ये ग्राम्याः पशवो ये चारण्यास्तेषाँ सर्वेषामिह पुष्टिरस्तु ॥ **इति** ॥ १७ ॥ उद्भवः स्थोदहं प्रजया पशुभिर्भूयासम् **इति ज्योतिषावेक्षते** ॥ १८ ॥ हरस्ते मा विनैषम् **इति स्रुवेणोदबिन्दुं प्रतिनयति न**[१] **दध्याज्ययोः** ॥ १९ ॥ **तेन धर्मेण पुनरवेक्ष्य**[२] अन्तरितँ रक्षोऽन्तरिता अरातयः **इति तृणेन त्रिः पर्यग्निं कृत्वा वर्त्म कुर्वन्नुदगुद्वासयति** घर्मोऽसि रायस्पोषवनिरिहोर्जं श्रयस्व **इति** ॥ २० ॥ प्रत्यूढं जन्यं भयं प्रत्यूढाः सेना अभीत्वरीः **इत्यङ्गारान् प्रत्युह्य** निष्टप्तँ रक्षो निष्टप्ता अरातयः **इति स्रुवं निष्टप्य प्रणवमुक्त्वा** उन्नेष्यामि **इति यजमानँ सायमामन्त्रयते** । उन्नयामि **इति प्रातः** ॥ २१ ॥ अग्नये च त्वा पृथिव्यै चोन्नयामि ॥ वायवे च त्वान्तरिक्षाय चोन्नयामि ॥ सूर्याय च त्वा दिवे चोन्नयामि ॥ अद्भ्यश्च त्वौषधीभ्यश्चोन्नयामि **इति चतुरुन्नयति** ॥२२॥ **सर्वान् पूर्णान् यथालाभँ वा** ॥ २३ ॥ '**यं कामयेतानुज्येष्ठं प्रजया ऋध्नुयाद्**' (मै. सं. १.८.४) **इति ब्राह्मणव्याख्यातम्** ॥ २४ ॥ **उन्नीया होमाद्वाचँ यच्छेत्** ॥ २५ ॥ पशून मे यच्छ **इत्यभिहृत्य सादयति** ॥ २६ ॥ **दशहोत्राभिमृश्य** सजूर्देवैः सायँयावभिः **इति सायमुन्नीतम्-**

१. By emendation; B, N, CR omit cf. MānSS I 6. 1. 24.

२. Thus emended; B, N, CR पुनरवोक्ष्य.

भिमृशति । सजूर्देवैः प्रातर्यावभिः इति प्रातः ॥ २७ ॥ इदं देवानाम् इत्युन्नीतमभिमृशति इदमु नः सह इत्यवशिष्टम् ॥ २८ ॥ उर्वन्तरिक्षँ वीहि इति समया गार्हपत्यँ हरति ॥ २९ ॥ स्वाहाग्नये वैश्वानराय स्वाहा इति समयाध्वे[1] नियच्छति ॥ ३० ॥ वायवे त्वा इत्युद्यच्छति ॥ ३१ ॥ आयुर्मे यछ इति पश्चादाहवनीयस्य दर्भेषु सादयति ॥३२॥ एषा ते अग्ने समिद् इत्याहवनीये प्रादेशमात्रीं पालाशीँ समिधमादधाति ॥ ३३ ॥ द्व्यङ्गुले ज्वलन्तीमभिजुहोति । भूर्भुवः स्वरग्निहोत्रँ होत्राग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इति सायम् । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा इति प्रातः ॥३४॥ इषे त्वा इत्यवाचीनँ[2] सायं लेपमवमार्ष्टि । ऊर्जे त्वा इत्यूर्ध्वँ प्रातः ॥ ३५ ॥ वर्चो मे यछ इति सादयति ॥ ३६ ॥ ओषधीभ्यस्त्वा इति दर्भेषु लेपं निमार्ष्टि ॥ ३७ ॥ प्रजापते पशून्मे पाहि इति गार्हपत्यमवेक्षते ॥ ३८ ॥ पूर्वामसँसक्तां भूयसीं द्वितीयामाहुतिं जुहोति प्रजापतये स्वाहा इति मनसा ॥ ३९ ॥ अनाभो मृड धूर्ते इति त्रिरुदीचीँ स्रुचमुद्धरति ॥ ४० ॥ तेन धर्मेणोन्मृज्यावमृज्य वा प्रजां मे यछ इति सादयति ॥४१ ॥ पितॄञ्जिन्व इति दक्षिणतः पृथिव्यां लेपं निमार्ष्टि ॥ ४२ ॥ अपः स्पृष्ट्वा पूषासि इति द्विरङ्गुल्या प्राश्नाति ॥ ४३ ॥ न दतो गमयेत् ॥ ४४ ॥ उदग्दण्डया स्रुचान्तर्वेदि भक्षयति गर्भान् प्रीणाति गर्भेभ्यः स्वाहा इति ॥ ४५ ॥ निरस्य लेपं परिस्तरणैः स्रुचं प्रक्षाल्योत्करं प्रदाय पूरयित्वा प्रागुदीचीमुत्सिञ्चति सर्पान् पिपीलिकाः प्रीणाति सर्पेभ्यः पिपीलिकाभ्यश्च स्वाहा इति ॥ ४६ ॥ द्वितीयं पश्चादाहवनीयस्य पृथिव्याममृतं जुहोमि स्वाहा इति ॥ ४७ ॥ स्रुचं निष्टप्य हस्तमवधायोत्तरतो निदधाति सप्तऋषीन् प्रीणाति सप्तऋषिभ्यः स्वाहा इति ॥ ४८ ॥ यथाकाम्यपरयोर्होमः[3] ॥ ४९ ॥ अग्ने गृहपते

---

१. B, N समयाज्ये.

२. B, N इत्यवाचँ

३. CR reads sūtras 49–50 as one sūtra.

परिषद्य जुषस्व स्वाहा इत्येकस्रुवं विगृह्णाति दक्षिणाग्नौ च अग्नये पुष्टिपतये स्वाहा इति[1]। प्राजापत्य उत्तरः[2] ॥ ५० ॥ अन्तर्वेदि प्रक्षालनं निनयति सर्पदेवजनान् प्रीणाति सर्पदेवजनेभ्यः स्वाहा इति ॥ ५१ ॥ दीदिहि दीदाय दीदिदाय स्वाहा इति पर्यायैः सर्वेषु समिध आधाय तेन धर्मेण पर्युक्षति ॥ ५२ ॥

॥ इति पुनराधेये पञ्चमेऽध्याये[3] द्वितीयं खण्डम् ॥

पयसा जुहुयात् पशुकामस्य यवाग्वा ग्रामकामस्याज्येन तेजस्कामस्य दध्नेन्द्रियकामस्य तण्डुलैर्बलकामस्य ॥ १ ॥ द्वादशरात्रमाज्येन दध्ना द्वादशरात्रम् ॥ २ ॥ नित्यं पयो यवागूश्च[4] ॥ ३ ॥ पयोऽभावे यवागूरशुष्का[5] ॥ ४ ॥ द्वयोर्गवोः स्थाल्या दोहनेन च दोहयित्वा पशुकामस्य जुहुयात् ॥ ५ ॥ सजूर्जातवेदो दिवः पृथिव्या जुषाणो अस्य हविषो वीहि स्वाहा इति जुहुयाद्यत्र रुद्रः पशूनभिमन्येत ॥ ६ ॥ आज्यमग्निहोत्रम् ॥ ७ ॥ यदि नारमेद् अग्ने दुःशीर्ततनो

१. The offering priest should divide one spoonful into two parts; with *agne gṛhapate....*he should offer one part on the Gārhapatya fire, and with *agnaye puṣṭipataye svāhā* the second part on the Dakṣiṇa fire. Similarly he should divide the second spoonful into two parts; he should offer one part on the Gārhapatya fire with *prajāpataye svāhā*, and the second part on the Dakṣiṇa fire with the same formula. MānŚS I. 6. 1. 52 prescribes differently.

२. उत्तरः stands for the second spoonful. CR उत्तरे. N omits the portion from दक्षिणाग्नौ to प्रक्षा (from प्रक्षालन) in sūtra 51.

३. B, N omit.

४. CR यवागुश्च.

५. N, CR यवागु°

जुषस्व स्वाहा इति जुहुयात् ॥ ८ ॥ यदि नारमेद् द्वादशरात्रँ सायँ सायं जुहुयात् ॥ ९ ॥ अनर्हतो राजन्यस्य पर्वस्वग्निहोत्रं जुहुयान्नान्तराले ॥ १० ॥ सायं प्रातरग्रं भक्तस्य ब्राह्मणकुलँ हरेदग्न्युपस्थानं च वाचयेत् ॥ ११ ॥ संततमर्हतो जुहुयात् ॥ १२ ॥ सायं पत्न्यन्वास्ते न प्रातः ॥ १३ ॥ हिंकृत्य स्त्रियमुपेयात् ॥ १४ ॥ सूर्योढमतिथिं नापरुन्धीत[1] ॥ १५ ॥ न सायमहुतेऽग्निहोत्रेऽश्नीयान्न प्रातः ॥ १६ ॥ वसन्ता शिशिरे कक्षं दहेत् ॥ १७ ॥

॥ इति पुनराधेये पञ्चमेऽध्याये[2] तृतीयं खण्डम् ॥

१. B, N नाव°
२. B, N omit.

# अग्न्युपस्थानम्

अधिश्रितेऽग्निहोत्रे ममाग्ने वर्चः इति चतसृभिर्वैहवीभिर्हस्ताववनेनिजीत[1] ॥ १ ॥ पुरस्तादग्नीषोमीयाया उत्तराश्चतस्रो जपेत् ॥ २ ॥ विद्युदसि विद्य मे पाप्मानम् इत्यप उपस्पृश्य तिष्ठेत् ॥ ३ ॥ उन्नीयमाने वाचँ यच्छति ॥ ४ ॥ अभ्युदाहृत उपविश्य दशहोत्राभिमृश्योत्तरामाहुतिमुपोत्थाय उपप्रयन्तो अध्वरम् इति प्रागुदङ्मुखश्चतुर्भिरनुवाकैराहवनीयमुपतिष्ठते[2] ॥ ५ ॥ अग्नीषोमीयया पूर्वपक्ष ऐन्द्राग्न्यापरपक्षे ॥ ६ ॥ अग्ना आयूँषि पवसा इति षड्भिराहवनीयं नित्यम् । सँवत्सरे सँवत्सरे गार्हपत्यम् ॥ ७ ॥ अग्नेः समिदसि इति पर्यायैराहवनीये समिध आदधाति ॥ ८ ॥ चित्रावसो[3] स्वस्ति ते पारमशीयार्वाग्वसो स्वस्ति ते पारमशीय इति त्रिर्जपति । प्रातरुपस्थाने च[4] ॥ ९ ॥ अम्भः स्थाम्भो वो भक्षीय इति गृहानुपतिष्ठते ॥ १० ॥ रेवती रमध्वम् इत्यन्तराग्नी तिष्ठन् जपति ॥ ११ ॥ सँहितासि विश्वरूपा इति वशामालभते वत्सँ वा ॥ १२ ॥ उप त्वाग्ने दिवे दिवे इति गार्हपत्यम्[5] ॥ १३ ॥ अभ्यस्थाँ विश्वाः इत्याहवनीयम् ॥ १४ ॥ ऊर्जा वः पश्याम्यूर्जा मा पश्यत इति गृहान् पशूनभिवीक्षते ॥ १५ ॥ इडाः स्थ इति गामालभते । भुवनमसि इति वत्सम् ॥ १६ ॥ 'निम्रदोऽसि' ( मै. सं. १.५.११ ) इति ब्राह्मणव्याख्यातम् ॥ १७ ॥ प्राची दिग् इति पर्यायैर्दिश उपतिष्ठते ॥ १८ ॥ अग्ने गृहपते इति गार्हपत्यँ यथा याजमाने[6] ॥ १९ ॥ ज्योतिषे

---

१. CR reads sūtras 1–2 as one sūtra.

२. CR °तिष्ठेत

३. N °वसोः cf. MS I. 5.2 ( Aundh edn )

४. CR reads sūtras 9–10 as one sūtra.

५. CR reads sūtras 13–14 as one sūtra.

६. cf. VārŚS I. 1.4. 27, 28.

तन्तवे त्वा इत्यन्तर्वेद्युपविश्याहवनीयेऽभ्याधाय वृष्टिरसि वृश्च मे पाप्मानम् इत्यप उपस्पृशेत् ॥ २० ॥ प्रातरवनेनेन[1] प्रातरुपतिष्ठते[2] ॥ २१ ॥ अपां पते योऽपां भागः स त एषः इति प्रागुदञ्चमुदकाञ्जलिमुत्सिच्य प्रतिषिक्ता अरातयः इति त्रिः प्रत्युक्षति ॥ २२ ॥ कालाय वाम् इति पाणी प्रक्षाल्य इदमहं दुरद्मन्यां निष्प्लावयामि इत्याचम्य निष्ठीवति ॥ २३ ॥ भ्रातृव्याणाँ सपत्नानाम् इति पाणी प्रक्षालयते ॥ २४ ॥ इन्द्रियवतीमद्य इति यथारूपं गात्राणि संमृशति ॥ २५ ॥ अदो मा मा ह्रासिष्ट इति पाणी प्रक्षालयते ॥ २६ ॥ सूर्यपत्नीः इत्यभिषिञ्चन् पुरुध्यवानो महिषः इति च हुते चतस्रो वैहवीरुक्त्वा घर्मो जठरे इत्यनुवाकेनाहवनीयमुपतिष्ठते[3] ॥ २७ ॥ असौ स्वस्ति तेऽस्त्वसौ स्वस्ति तेऽस्तु इति नामग्राहं पुत्रानन्वायातयति[4] ॥ २८ ॥ अग्नीन् समाधेहि इत्याह प्रवत्स्यन् ॥ २९ ॥ भास्वत उपतिष्ठते । पशून् मे शँस्य पाहि इत्याहवनीयं प्रजां मे नर्य पाहि इति गार्हपत्यम् अन्नं मे बुध्य पाहि इति दक्षिणाग्निँ सप्रथ सभां मे पाहि इति सभ्यम् अहिर्बुध्न्य मन्त्रं मे पाहि इत्यावसथ्यम् ॥ ३० ॥ इमान् मे मित्रावरुणौ गृहान् गोपायतँ युवम् इत्यन्तराग्नी तिष्ठन् जपति ॥ ३१ ॥

मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे ।
तत्त्वं बिभृहि पुनरा ममैतोस्तवाहमग्ने बिभराणि नाम ॥

इत्याहवनीयम् ॥ ३२ ॥

मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः ।
मान्तः स्थुर्नो अरातयः ॥
यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः ।
तमाहुतं नशीमहि ॥

---

१. B, N प्रातरवनेन.
२. CR °तिष्ठेत
३. CR °तिष्ठेत
४. Thus emended; B, N, CR °नन्वातयते.

इति व्रजति ॥ ३३ ॥ सकाशे वाचँ यछत्यसकाशे विसृजते ॥ ३४ ॥ यथाकालमग्न्युपस्थानयाजमाने जपेत् ॥ ३५ ॥ प्रोष्य समिध आहरति ॥ ३६ ॥ असकाशे वाचँ यछति सकाशे विसृजते ॥ ३७ ॥ अग्नीन् समाधेहि इत्याह प्रोष्य[१] ॥ ३८ ॥ भास्वत उपतिष्ठते ॥ ३९ ॥ अग्नेः समिदसि इति पर्यायैः सर्वेषु समिध आधाय

विश्वदानीमाभरन्तोऽनातुरेण मनसा ।
अग्ने मा ते प्रतिवेशा रिषाम ॥

इत्याहवनीयं पशून् मे शँस्याजुगुपः इति च । प्रजां मे नर्याजुगुपः इति गार्हपत्यम् । अन्नं मे बुध्याजुगुपः इति दक्षिणाग्निम् । सप्रथः सभां मेऽजुगुपस्तां मे पुनर्देहि इति सभ्यम् । अहिर्बुध्न्य मन्त्रं मेऽजुगुपस्तं मे पुनर्देहि इत्यावसथ्यम् ॥ ४० ॥ इमान्मे मित्रावरुणौ गृहानजुगुपतँ युवम् इत्यन्तराग्नी तिष्ठञ्जपति ॥ ४१ ॥

मम च नाम तव च जातवेदो वाससी इव विवसानौ चरावः ।
ते बिभृतो महसे जीवसे च यथायथं नौ तन्वौ जातवेदः ॥

इत्याहवनीयम् ॥ ४२ ॥ नव रात्रीः परार्ध्याः[२] प्रोष्याहुतिं जुहोति

विश्वकर्मन् हविषा घृतेन विछिन्नँ यज्ञँ समिमं दधातु ।
या इष्टा उषसो याश्च याज्यास्ताः संदधामि मनसा घृतेन ॥

इति ॥ ४३ ॥ नव रात्रीः पराध्या[३] उषित्वा सहगृहं[४] प्रयास्यन् युक्तेषु चक्रावत्सु वास्तोष्पत्यं जुहोति ॥ ४४ ॥ न हीनमन्वाहरेयुः ॥ ४५ ॥ अमीवहा वास्तोष्पते ॥ वास्तोष्पते इत्येताभ्यामाहुती हुत्वा अयं ते योनिर्ऋत्वियः इत्यरण्योरग्निँ समारोपयति । गार्हपत्याहवनीयौ गतश्रियो गार्हपत्यमगतश्रियः ॥ ४६ ॥ दक्षिणाग्निर्यदि मध्यः समा-

१. CR reads sūtras 38–39 as one sūtra and punctuates after इत्याह.
२. B, N, CR परार्धाः
३. B, N, CR परार्धा
४. B सगृहं; CR सहगृहः

**रोपयेत् ॥ ४७ ॥ यद्यरण्योर्नाशमाशङ्केत** सक्षेहि या ते यज्ञिया तनूस्तये-ह्यारोह इत्यात्मनि विहारँ समारोपयति ॥ ४८ ॥ **न सहाग्निर्ऋते गृहेभ्यः प्रवसेत् ॥ ४९ ॥ नासंदहयावक्षाणानि प्रयायात् ॥ ५० ॥**

उपावरोह जातवेदो देवेभ्यो हव्यँ वहतु प्रजानन् ।
आयुः प्रजाँ रयिमस्मासु धेह्यरिष्टो दीदिहि नो दुरोणे ॥

**इत्युपावरोह्य मन्थेत् ॥ ५१ ॥**

**॥ इति पुनराधेये पञ्चमेऽध्याये[१] चतुर्थं खण्डम् ॥**

१. B, N omit.

# आग्रायणम्

श्यामाकान् बुभुक्षमाणः पुराणानाँ व्रीहीणामाग्नेयमष्टाकपालं निर्वपेत् सौम्यं च श्यामाकं चरुम् ॥ १ ॥ बभ्रुः पिशङ्गो दक्षिणा वसनँ वा ॥ २ ॥ व्रीहीणामग्रपाकस्य यजते । यवानां च ॥ ३ ॥ नानिष्ट्वाग्रायणेन नवस्याश्नीत ॥ ४ ॥ ऐन्द्राग्नमेकादशकपालं निर्व-पेदाग्नेन्द्रँ वा ॥ ५ ॥ वैश्वदेवः पयसि चरुः सौम्यश्च श्यामाकश्चरुः । न यवाग्रायणे । द्यावापृथिवीय[1] एककपाल[1] इति हवीँषि ॥ ६ ॥ पुरस्तात् स्विष्टकृतोऽज्यानीर्जुहोति

शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे ।
शतँ यो नः शरदोऽनयदिन्द्रो विश्वस्य दुरितस्य पारँ स्वाहा ॥
ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति ।
तेषामज्यानीँ यतमो न आवहत्तस्मै नो देवाः परिदत्त सर्वे स्वाहा ॥
वसन्तो ग्रीष्मो मधुमन्ति वर्षाः शरद्धेमन्तः सुविते दधातु[2] नः ।
तेषाँ वयँ सुमतौ यज्ञियानां ज्योगजीता अहताः स्याम स्वाहा ॥
स्वस्ति सँवत्सराय परिवत्सरायेदावत्सरायोद्वत्सराय कृणुता बृहन्नमः ।
तेषाँ वयँ सुमतौ यज्ञियानां निवात एषामभये स्याम स्वाहा ॥
इयँ स्वस्तिः सँवत्सरीया परिवत्सरीयेदावत्सरीयोद्वत्सरीया ।
सा नः पिपर्त्वहृणीयमानेनाहेदमहरशीय[3] स्वाहा ॥
इति[4] ॥ ७ ॥ आ नः प्रजां जनयतु इति षष्ठी ॥ ८ ॥ इडां

१. B, N द्यावापृथिवीय द्यावापृथिवीय एकादशकपाल

२. Thus B, N; CR, KS XIII. 15 दधात

३. Thus KS XIII. 15; MānŚS I. 6.4.21; N पिपर्तुहरिणीयमानेना-हेदहरमशीय; CR °मानेनाहेदहारम ( ? )शीय.

४. CR reads sutras 7–8 as one sūtra. There are only five *ajyānī* oblations. cf. BaudhŚS 3.12: अज्यानीर्जुहोति शतायुधाय शतवीर्याय इति पञ्च. The sixth oblation with आ नः प्रजां etc. is not covered by the term *ajyānī*. MānŚS I. 6.4.21: षडाज्याहुतीर्जुहोति.

भक्षयति[1] ॥ ९ ॥

भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहि त्वा ।
स नो मयोभूः पितुराविवेश शिवस्तोकाय तन्वो न एधि ॥

इति व्रीहीणाम् ॥ १० ॥

अग्निः प्राश्नातु प्रथमः स हि वेद यथा हविः ।
शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः ॥

इति श्यामाकानाम् ॥ ११ ॥

एतमु त्यं मधुना सँयुतँ यवँ सरस्वत्या अधि मनावचक्रुषुः ।
इन्द्र आसीत् सीरपतिः शतक्रतुः कीनाशा आसन् मरुतः सुदानवः ॥

इति यवानाम् ॥ १२ ॥ वत्सः प्रथमजो दक्षिणा वत्सः प्रथमजो दक्षिणा ॥ १३ ॥

॥ इति पुनराधेये पञ्चमेऽध्याये[2] पञ्चमं खण्डम् ॥

॥ इति पञ्चमोऽध्यायः[3] ॥

१. CR reads sūtras 9–12 as one sūtra.
२. B, N omit.
३. N adds समाप्तः

# निरूढपशुबन्धः

उदगयनस्याद्यन्तयोरैन्द्राग्नेन पशुना यजेत सँवत्सरे सँवत्सरे वा ॥ १ ॥ षड्ढोत्रा मनसा जुहोति वाग्घोता दीक्षा पत्न्यापोऽध्वर्यु-र्वातोऽभिगरः प्राणो हविर्मनो ब्रह्मा तपसि जुहोमि स्वाहा इति ॥ २ ॥ ग्रहेण द्वितीयाँ वाचस्पतेऽछिद्रया वाचाछिद्रया जुह्वा दिवि देवामृदँ होत्रामैरयँ स्वाहा इति ॥ ३ ॥ आग्नावैष्णवमेकादशकपालं निर्वपति वैष्णवीँ वा पूर्णाहुतिम् ॥ ४ ॥ उरु विष्णो विक्रमस्व इति वैष्णव्या हुत्वा यूपमच्छैति बिल्वपलाशखदिररोहितकोदुम्बराणामेकम् ॥ ५ ॥ बैल्वं ब्रह्मवर्चसकामः कुर्वीत ॥ ६ ॥ पञ्चारत्न्यादिप्रमाणमनधिशाख्य-मृजुमूर्ध्वशल्कमुपरिष्टादुपावनतं बहुपलाशशाखमप्रतिशुष्काग्रं प्राञ्चं प्रत्यञ्चँ वाहानम् ॥ ७ ॥ अत्यन्यानगाम् इत्यभिमन्त्र्य विष्णवे त्वा इत्याज्येन पर्यनक्ति ॥ ८ ॥ ओषधे त्रायस्वैनम् इति दर्भमन्तर्दधाति ॥ ९ ॥ स्वधिते मैनँ हिँसीः इति परशुना प्रहरति ॥ १० ॥ प्रथमशल्कमुपयम्य भूमिसमँ वृश्चति ॥ ११ ॥ यं त्वामयँ स्वधितिः इति प्राञ्चं प्रहापयति ॥ १२ ॥ वनस्पते शतवल्शो[1] विरोह इत्याव्रश्चने जुहोति ॥ १३ ॥ सहस्रवल्शाः[2] इत्यात्मानं प्रत्य-भिमृशति ॥ १४ ॥ अष्टाश्रिं तक्षति गोपुच्छमतष्टमूलम् ॥ १५ ॥ अग्रतोऽग्निष्ठां पृष्ठतः स्रुयस्थाम् ॥ १६ ॥ अग्रस्य चषालं पृथमात्र-

१. Thus B, N, MS I. 1.2; 2.14; CR शतवल्शो cf. VārŚS I 2.1.19.

२. Thus B, N, MS I. 1.2; 2.14 cf. VārŚS I. 2.1.20. CR सहस्रवल्शा. MānŚS I 8.1.12, 13 reads शतवल्शो and सहस्रवल्शा respectively, but the editor of that text has noted that all Mss except a single one read following MS.

मष्टाग्नि मध्ये संगृहीतम् ॥ १७ ॥ इध्माबर्हिः संनह्य वेदं कृत्वा रथमात्रीँ वेदिं करोति[१] ॥ १८ ॥ शम्यामात्रीमुत्तरवेदिम् ॥ १९ ॥ यत् प्रागुत्तरस्मात् परिग्राहात् तत् कृत्वा सावित्रेणाग्निमादाय अग्निरसि नारिरसि इत्यभिमन्त्र्योत्तरत उत्तरवेद्यन्तात् प्रक्रममात्रे चात्वालं परिलिखति[२] ॥ २० ॥ तप्तायनी मेऽसि इति पर्यायैर्दिक्षु शम्यां निधायानुशम्यमभ्र्या व्यवलिखति ॥ २१ ॥ जानुदघ्नं चतुरश्रं खात्वोत्तरवेद्यै पाँसून् हरति ॥ २२ ॥ विदेरग्ने इति खनति ॥ २३ ॥ अग्ने अङ्गिरः इत्यवदाय वसवस्त्वा हरन्तु इति हरति ॥ २४ ॥ वित्स्व यज्ञपतेः इति पश्चाद्यूपावटस्य निवपति ॥ २५ ॥ एतेन धर्मेणोत्तराभ्यां पर्यायाभ्यां त्रिर्यजुषा हरति तूष्णीं चतुर्थम् ॥ २६ ॥ समानः खननो निवपनश्च ॥ २७ ॥ देवेभ्यः प्रथस्व इत्युत्तरवेदिं प्रथयति ॥ २८ ॥ देवेभ्यः कल्पयस्व इति कल्पयति ॥ २९ ॥ चतुरश्रामुत्तरवेद्यां प्रादेशमात्रीं नाभिं कृत्वा सिँहीरसि महिषीरसि इत्यभिमन्त्र्य देवेभ्यः शुन्धस्व इत्युत्तरवेदिं प्रोक्षति ॥ ३० ॥ देवेभ्यः शुम्भस्व इति सिकताभिः प्ररोचयति ॥३१॥ अद्भिर्निःसारयति संततामुदकधाराँ स्रावयन् स्फ्येन वर्त्म कृत्वा समयोत्तरावँसौ[३] आपो[३] रिप्रं निर्वहत इति ॥ ३२ ॥ प्रोक्षणीः सँस्कृत्योत्तरवेदिं प्रोक्षति इन्द्रघोषास्त्वा इति पर्यायैरनुपरिक्रामन् ॥ ३३ ॥ पितृणां भागधेयीः स्थ इति दक्षिणत उत्तरवेद्याः प्रोक्षणीशेषं निनीय पञ्चगृहीतेनाज्येनोत्तरवेदिँ व्याघारयति हिरण्यं निधाय सिँहीरसि सपत्नसाही स्वाहा इति पर्यायैरक्ष्णया श्रोण्यँसेषु ॥ ३४ ॥ मध्ये पञ्चमेन ॥ ३५ ॥ भूतेभ्यस्त्वा इति त्रिरुदीचीँ स्रुचमुद्दिशति ॥ ३६ ॥ नाभ्यां पौतुद्रवान् परिधीन् परिदधाति प्रादेशमात्रान् विश्वायुरसि इति पर्यायैः ॥ ३७ ॥ अवेरनाछिन्नस्तुकस्यान्तरा[४] भृङ्गादूर्णास्तुकां केरु-

१. CR reads sūtras 18–19 as one sūtra.
२. CR reads sūtras 20–21 as one sūtra.
३. Thus emended; N समयोत्तरावशावायो; CR समयोत्तरावसावापो.
४. B, N अवेदना°

गुल्गुलिवति नाभ्याँ संभारान्निवपति[१] अग्नेर्भस्मासि इति पर्यायैः ॥३८॥ विभ्राड् बृहत् इत्यान्तादनुवाकस्योत्तरवेदिमभिमृश्याहवनीयादग्निं प्रणयति ॥ ३९ ॥

॥ इति पशुषु षष्ठेऽध्याये[२] प्रथमं खण्डम् ॥

यत्ते पावक चकृमा कच्चिदागः पूर्वो यः सन्नपरो भवति ।
घृतेनाग्ने तन्वँ वर्धयस्व मा मा हिँसीरधिगतं पुरस्तात् ॥

इत्युद्यतेऽग्नावाहवनीये जुहोति ॥१॥ अग्नये प्रणीयमानायानुब्रूहि इति संप्रेष्यति ॥ २ ॥ उपयच्छत्युपयमनीः ॥३॥ ऊर्णावन्तम् इत्यनूच्यमाने[३]

यज्ञः प्रत्यष्ठात् सुमतिः सुमेधा आ त्वा वसूनि पुरोधार्हन्ति ।
दीर्घमायुर्यजमानाय कृण्वन्नथामृतेन जरितारमङ्धि ॥

इति संभारेष्वध्वर्युरग्निँ सादयति ॥ ४ ॥ यस्मादधि[४] प्रणयति तस्मिन् गार्हपत्यकर्माणि कुर्वीताग्निहोत्रं च जुहुयादौत्तरवेदिके ॥ ५ ॥ वरुणप्रघासेष्वग्निहोत्रं प्रणयनी पूर्णाहुतिरिति यथाग्न्याधेये ॥ ६ ॥ अतिमुक्तीर्जुहोति

अग्निर्यज्ञं नयतु प्रजानन् मैनँ यज्ञहनो विदन् ।
देवेभ्यो यज्ञं नयतात् प्र प्र यज्ञपतिं तिर स्वाहा ॥

इति । वायुः, सूर्यो, यज्ञो[५] यज्ञं नयतु इति समानम् ॥७॥ प्रणीतेऽग्न्यन्वाधानँ[६] व्रतोपायनम् ॥ ८ ॥ पाणिप्रक्षालनप्रभृति समानमा पात्रप्रयोगात् ॥ ९ ॥ एकादशकपालः पुरोडाशो द्वादशकपालो वा ॥ १० ॥ द्वे जुह्वौ[७] वसाहोमहवनी द्वितीया । द्वे उपभृतौ पृषदाज्यधानी द्वितीया ।

१. CR cuts the sūtra at this point.
२. B, N omit.
३. Thus N; CR इत्युच्यमाने
४. N यस्मादति.
५. added by conjecture cf. ĀpŚS VII. 7.9
६. B, N °ग्निन्वाधान.
७. Thus N; CR जुह्वे.

द्वे आज्यस्थाल्यौ । यूपशल्कम् । स्वधितिम्[१] । शूलम् । पशूखाम्[२] । कार्ष्मर्यमय्यौ वपाश्रपण्यौ द्विशृङ्गैकशृङ्गे । औदुम्बरमास्यदघ्नं मैत्रावरुणदण्डम् । दर्भाणाँ रशने द्विगुणां द्विव्यायामां त्रिगुणां त्रिव्यायामाम्[३] । ॥ ११ ॥ सँसाद्य प्रोक्ष्य पात्राण्याज्यं निर्वपति दधि च ॥ १२ ॥ पृषदाज्यायाज्यधर्मैर्दधि[४] सँस्करोत्युपभृद्धर्मैः[५] पृषदाज्यधानीं पात्राणि च पात्रधर्मैर्द्वितीयानि ॥ १३ ॥ स्फ्यप्रक्षालनप्रभृति समानमाज्यग्रहेभ्यः[६] ॥१४॥ चतुरुपभृति गृहीत्वा पञ्चगृहीतं पृषदाज्यधान्यामाज्येन संनीय महीनां पयोऽसि ॥ विश्वेषां देवानां तनूरसि ॥ ऋध्यासमद्य पृषतीनां ग्रहम् ॥ पृषतीनां ग्रहोऽसि ॥ विष्णोर्हृदयमसि इति पर्यायैः ॥ १५ ॥ सन्नेष्वाज्येषु यूपावटं परिलिखति इदमहँ रक्षसो ग्रीवा अपिकृन्तामि इति पूर्वस्य वेद्यन्तस्य मध्येऽर्धमन्तर्वेद्यर्धं बहिर्वेदि ॥ १६ ॥ उत्तरतश्चात्वालस्य शामित्रलक्षणमुद्धन्ति ॥ १७ ॥

॥ इति पशुषु षष्ठेऽध्याये[७] द्वितीयं खण्डम् ॥

यत्ते शोचिः परावधीत्तक्षा हस्तेन वास्या ।
आपस्तत्पावकाः शुन्धन्तु शुचयः शुचिम् ॥

इति स्नातँ यूपं तीर्थेनोपसाद्य तूष्णीकाँ यवमतीः प्रोक्षणीः सँस्कृत्य यूपं प्रोक्षति । पृथिव्यै त्वा इति मूलम् अन्तरिक्षाय त्वा इति मध्यं दिवे त्वा इत्यग्रम्[८] ॥ १ ॥ शुन्धन्तां लोकाः इति यूपावटम् ॥ २ ॥

---

१. Thus N; CR omit.
२. B पशुऋषिखां; N पशूर्षीखां
३. CR reads sūtras 11–12 as one sūtra.
४. Thus N; CR पृषदाज्यधर्मैर्दधि
५. B सँस्कत्यादुप;° N सँस्कत्यादुप°
६. B, N समानमाज्यधर्मेग्रहेभ्यः
७. B, N omit.
८. CR reads sūtras 1–2 as one sūtra.

यवोऽसि इति यवानवदधाति ॥३॥ पितृषदनं त्वा इति दर्भैरवस्तृणाति ॥ ४ ॥ स्वावेशोऽसि इति प्रथमशल्कमवधाय घृतेन द्यावापृथिवी इति स्रुवेणाभिजुहोति ॥ ५ ॥ पुरस्तात्प्रत्यञ्चँ यजमानो यूपमनक्ति ॥ ६ ॥ यूपायाज्यमानायानुब्रूहि इति संप्रेष्यति ॥ ७ ॥ आन्तमविच्छिन्नमनक्ति ॥ ८ ॥ देवस्त्वा सविता मध्वानक्तु इति यूपाग्रमनक्ति[१] ॥ ९ ॥ सर्वँ सहचषालमनक्ति इन्द्रस्य चषालमसि इति ॥ १० ॥ चषालं प्रतिमुच्य सुपिप्पला ओषधीः इत्यङ्गुलिमात्रमूर्ध्वँ चषालाद्यूपाग्रं कनीयो वा ॥ ११ ॥ यूपायोच्छ्रीयमाणायानुब्रूहि इति संप्रेष्यति ॥ १२ ॥ दिवमग्रेणोत्तभान इत्युच्छ्रयति ॥ १३ ॥ ता ते धामानि इत्यवदधाति ॥ १४ ॥ विष्णोः कर्माणि इत्यवस्थापयत्यग्निमभिमुखीमग्निष्ठाम् ॥ १५ ॥ न तष्टस्य निखनति ॥१६॥ नातष्टस्याविः करोति ॥१७॥ ब्रह्मवनि त्वा इति पाँसुभिः परिवपति ॥ १८ ॥ ब्रह्म दृँह क्षत्रं दृँह इति यजमानो मैत्रावरुणदण्डेन परिदृँहयति ॥१९॥ प्रोक्षणीशेषेण परिषिच्य तद्विष्णोः इति स्वरुरशनेन समुन्मार्ष्टि ॥ २० ॥ दिवीव चक्षुराततम् इति संमितमभिमन्त्रयते ॥ २१ ॥ त्रिवृता यूपं परिव्ययति[२] ॥२२॥ अग्रतो रशनायास्त्रिः परिहरणाय यूपायावशिष्य शेषं द्वैधँ संभुज्योत्तरतः सूर्यस्थाया नाभिमात्रे संभोगं प्रतिष्ठाप्य यूपाय परिवीयमाणायानुब्रूहि इति संप्रेष्यति ॥ २३ ॥ परिवीरसि इति त्रिः परिव्ययत्युत्तरमुत्तरं प्रदक्षिणम् ॥ २४ ॥ संभोगे रशनाग्रमतिहृत्य मूलतो निरायम्यान्तात् प्रवेष्टयति ॥ २५ ॥ अणीयसी ँ स्थवीयस्युपकर्षति ॥ २६ ॥ ‘ यदि कामयेत वर्षेत् पर्जन्यः ’ ( मै. सं. ३.९.४ ) इति ॥ २७ ॥ अञ्जनादि[३] यजमानो यूपं नापरिवीतमवसृजति ॥ २८ ॥ दिवः सानूपेष इत्युत्तमे रशनागुणे स्वरुमुपकृष्याजमुपाकरोति श्वेतं लोहितं द्विरूपँ वा

१. CR reads sutras 9–10 as one sūtra.

२. CR reads sūtras 22–23 as one sūtra.

३. B, N अंजनादीन्.

श्मश्रुलम् ।। २९ ।। कूटाकर्णकाणखण्डबण्डापन्नदन्त इति प्रतिषिद्धाः ।। ३० ।। उत्तरतो यूपस्य प्रत्यञ्चं पशुमवस्थाप्याहुती जुहोति ।। ३१ ।।

।। इति पशुषु षष्ठेऽध्याये[1] तृतीयं खण्डम् ।।

प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः ।
ता अस्मै प्रतिवेदय चिकित्वं[2] अनु[2] मन्यताम् ।।
इमं पशुं पशुपते तेऽद्य बध्नाम्यग्ने सलिलस्य मध्ये ।
अनुमन्यस्व सुयजा यजेह जुष्टं देवेभ्य इदमस्तु हव्यम् ।।

इति ।। १ ।। इषे त्वा इति दर्भावादत्ते ।। २ ।। उपावीरसि इति प्लक्षशाखां हरिणीं पलाशवतीम् ।। ३ ।। तया दर्भाभ्यां च पशुमुपाकरोति उपो देवान् इति ।। ४ ।। प्रत्यञ्चं पशुमनुमार्ष्टि अमुष्मै त्वा जुष्टम् इति यथादेवतम् ।। ५ ।। अभिधानप्रोक्षणवपोत्खेदनाभिधारणेषु ।। ६ ।। पश्चान्मध्यमस्य परिधेरधिमन्थनं शकलं प्रयुनक्ति अग्नेर्जनित्रमसि इति[3] ।। ७ ।। वृषणौ स्थः इत्यप्रछिन्नप्रान्तौ दर्भौ ।। ८ ।। तयोरधि उर्वश्यसि इत्युदक्तूलां[4] प्रत्यक्प्रजननामधरारणिम् ।। ९ ।। आयुरसि इत्याज्यस्थाल्यामुत्तरारणिमनक्ति संपादयति च ।।१०।। पुरूरवा असि इत्यभिमन्त्र्य गायत्रमसि इति पर्यायैस्त्रिरभिमथ्य अग्नये मथ्यमानायानुब्रूहि इति संप्रेष्यति ।। ११ ।। अग्नये जाताय इति जाते ।। १२ ।। अग्नये प्रहियमाणाय इति प्रहरिष्यन् ।। १३ ।। अग्रेणोत्तरं परिधिमुत्तरेण वा परिधिसंधिनान्ववहृत्य भवतं नः समनसौ इत्यनुप्रहृत्य अग्नावग्निः इति स्रुवेणाभिजुहोति ।। १४ ।। सावित्रेण रशनामादाय बाहुं

---

१. B, N omit.

२. Thus N; CR चिकित्वमनु; MānŚS I 8.3.1 चिकित्वाननु. The verse is from TB III. 1.4 where it reads चिकित्वाँ अनु. This is modified as चिकित्वं अनु following the Maitrāyaṇīya saṁdhi.

३. CR reads sūtras 7–8 as one sūtra.

४. Thus N; cf. MānŚS I 7.1.40. CR °दक्कूलां

पशोर्मध्यपाशेन[1] परिहृत्य दक्षिणार्धशिरोऽक्ष्णया[2] पाशेनाभिदधाति[3] ऋतस्य त्वा देवहविः इति ॥ १५ ॥ धर्षा मानुषा इति यूपे नियुनक्ति ॥ १६ ॥ प्रोक्षणीः सँस्कृत्य पशुं प्रोक्षति अद्भ्यस्त्वौषधीभ्यः इति ॥ १७ ॥ अनु त्वा माता मन्यताम् इत्यभिमन्त्र्य अपां पेरुरसि इति पाययति ॥ १८ ॥ स्वात्तँ सद्धविः इति शेषेण सर्वत उपोक्ष्य संमृश्याज्यानि वेद्यन्तान् परिस्तीर्य होतृषदनानास्तीर्य अग्नये[4] समिध्यमानायानुब्रूहि इति संप्रेष्यति ॥ १९ ॥ स्रौचमाधार्य ध्रुवां समज्य पशुँ समनक्ति। सं ते वायुः इति प्राणदेशँ सँ यजत्रैरङ्गानि इति कुकुद्देशँ[5] सँ यज्ञपतिराशिषा इति भसद्देशम् ॥ २० ॥ प्रयाजेषु समिद्भ्यः प्रेष्य इति प्रथमे संप्रेष्यति । प्रेष्य प्रेष्य इत्युत्तरान् ॥ २१ ॥ चतुर्थे चतुर्थे समानयति ॥ २२ ॥ दशभिः प्रचर्य स्वरुँ स्वधितिधारां च जुह्वामक्त्वा स्वरुणा स्वधितिमन्तर्धाय पशोरन्तराशृङ्गमनक्ति घृतेनाक्तौ पशूँस्त्रायेथाम् इति ॥ २३ ॥ आयतने स्रुचौ सादयति ॥ २४ ॥ आहवनीयादुल्मुकमुपयम्य पर्यग्नये क्रियमाणायानुब्रूहि इति संप्रेष्यति ॥ २५ ॥ शामित्रं चात्वालं पशुमाहवनीयँ यूपमाज्यानीत्याग्नीध्रस्त्रिः पर्यग्नि[6] कृत्वाहवनीय उल्मुकमवसृज्य त्रिः प्रतिपर्येति ॥ २६ ॥ ये बध्यमानम् इति पशुप्रमोचनीया जुहोति ॥ २७ ॥ रेवती इति वपाश्रपणीभ्यां पशुमन्वारभते यजमानश्च ॥२८॥ तदेवोल्मुकमुपयम्याग्नीध्रोऽग्रतः[7] प्रतिपद्यते[8]॥ २९॥ अन्वारभ्याश्रावयति ॥ ३० ॥ उल्मुकपाणिराग्नीध्रः प्रत्याश्रावयति[9]

१. B, N पशोर्मोघापाशेन.
२. B दक्षिणाध्यर्शिरो°, N दक्षिणमध्यशिरो°.
३. B, N पाशेनापि.°
४. B, N add देवेभ्यः
५. N कुर्वदेशँ
६. CR पर्यग्नि.
७. B, N तदेवोल्मुक उप°
८. Thus N; CR प्रतिपद्येत.
९. CR reads sūtras 31–32 as one sutra.

॥ ३१ ॥ उपप्रेष्य होतर्हव्या देवेभ्यः इति संप्रेष्यति ॥ ३२ ॥ उरो अन्तरिक्ष इत्यग्निमुखास्तीर्थेनोदञ्चो व्रजन्ति ॥३३॥ शामित्रलक्षणेऽग्निँ सादयति ॥ ३४ ॥ तस्मिन् पशुँ श्रपयति ॥ ३५ ॥ पश्चाच्छामित्रस्य याभ्यां दर्भाभ्यां पशुमुपाकरोति तयोरन्यतरमधस्तादुपास्यति समस्य तन्वा भव इति ॥३६॥ वर्षीयो वर्षीयसः इति यजमानो जपति ॥३७॥

॥ इति पशुषु षष्ठेऽध्याये[1] चतुर्थं खण्डम् ॥

नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिः सह देवयानः।
सम्यगायुर्यज्ञो यज्ञपतौ दधातु ॥

इति पर्यावृत्य इह प्रजा विश्वरूपा रमन्ताम् इति पृषदाज्यमवेक्षते यजमानश्च ॥१॥ प्रत्यक्शिरसमुदीचीनपादँ संज्ञपयन्ति ॥२॥ स्वर्विदसि इति यजमानः संज्ञप्यमानमनुमन्त्रयते ॥ ३ ॥ न वा एतन्म्रियसे इत्यध्वर्युः ॥ ४ ॥

यत्पशुर्मायुमकृतोरो वा पद्भिराहते[2]।
अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वँहसः ॥

इति संज्ञप्ते जुहोति ॥ ५ ॥ शमितार उपेतन इति संप्रेष्यति ॥ ६ ॥ पाशात्[3] पशुम् इति पाशेषु प्रमुच्यमानेषु जपति ॥ ७ ॥ एकशृङ्ग्या पाशाँश्चात्वालेऽनुप्रहरति ॥ ८ ॥ यो नो द्वेष्टचधरः स पद्यताम् इति यद्यभिचरेत् ॥ ९ ॥ स्तम्बँ[4] स्थाणुँ वापिदध्यात्

शतेन पाशैर्वरुणाभिधेहि मा ते मोच्यनृतवाङ नृचक्षः।
आस्तां जाल्म[5] उदरँ[5] स्रँसयित्वा कोश[6] इवाबन्ध्रः[6] परिकृत्यमानः ॥

१. B, N omit.
२. B, N पड्भि°
३. Thus N; CR पश्चात्
४. B, N स्थवँ
५. B जील्व्यमुदरँ; N जील्यमुदरँ.
६. B, N कोशेवाध:

इति ॥ १० ॥ नमस्त आतान इति पत्न्यादित्यमुपातिष्ठते ॥ ११ ॥ अनर्वा प्रेहि इत्येनामभ्युदानयते ॥१२॥ देवीराप: इत्यध्वर्यु चात्वालं पत्न्यपोऽवमर्शयति[1] ॥ १३ ॥ ताभ्यः[2] पत्नी पशोः प्राणान् प्रक्षालय-त्यध्वर्युर्वा ॥ १४ ॥ अन्यतरोऽभिषिञ्चेत् ॥१५॥ वाचमस्य मा हिँसीः इति यथारूपं गात्राणि संमृशति[3] ॥ १६ ॥ यत्ते क्रूरँ यदास्थितम् इति सर्वत्रानुषजेत्[4] ॥ १७ ॥ गात्राण्यस्य मा हिँसीः इति ग्रीवाः पृष्ठदेशम्[5] ॥१८॥ शमद्भ्यः इति शेषेण सर्वतः ॥१९॥ उत्तानं पर्यावृत्योपाकरणं दर्भमन्तर्दधाति ओषधे त्रायस्वैनम्[6] इति ॥ २० ॥ स्वधिते मैनँ हिँसीः इत्यनक्ततः स्वधितिना तिर्यगाछ्यति ॥ २१ ॥ उपयछति तृणाग्रम् ॥२२॥ लोहिताक्तं प्रत्यग्दक्षिणा निरस्यति पृथिव्यै त्वा रक्षसां भागोऽसि इति ॥ २३ ॥ इदमहँ रक्षोऽवबाध इदमहँ रक्षोऽधमं तमो नयामि इति पार्ष्ण्या तृणमवबाधते ॥२४॥ अपः स्पृष्ट्वा इषे त्वा इति वपामुत्खिदति ॥ २५ ॥ ऊर्जे त्वा इति तनिष्ठ[7] एकशृङ्गयोपतृणत्ति[7] ॥ २६ ॥ देवेभ्यः शुन्धस्व इति वपां प्रक्षालयति ॥ २७ ॥ देवेभ्यः शुम्भस्व इति लोहितं प्रत्यूहति ॥२८॥ घृतेन द्यावापृथिवी इति द्विशृङ्गां प्रछाद्योत्कृत्य[8] नमः सूर्यस्य संदृशे इत्यादित्यमुपस्थाय उर्वन्तरिक्षँ वीहि इति व्रजति ॥ २९ ॥ प्रत्युष्टँ रक्षः इति शामित्रे वपां प्रत्योषति[9] ॥ ३० ॥

॥ इति पशुषु षष्ठेऽध्याये[10] पञ्चमं खण्डम् ॥

१. B, N °ध्वमर्शयति
२. Thus B, N, CR
३. CR reads sūtras 16–17 as one sūtra.
४. Thus emended; B, N, CR पूर्वश्चा°.
५. CR reads sūtras 18–19 as one sūtra.
६. B, N, CR add दर्भमन्तर्दधाति. CR divides this into two sūtras, the first ending with °दधाति
७. B, N तन्नि( N न्नी )ष्टत्येकशृंगयेतियद्.
८. B, N °त्कृत
९. B प्रत्युषति; N प्रत्यृषति
१०. B, N omit

त्वामु ते दधिरे देवयन्तो हव्यवाहँ शृतं कर्तारमुत यज्ञियं च ।
अग्निः सुदक्षः सुतनुर्ह भूत्वा देवेभ्यो हव्या वह जातवेदः ॥

इति स्रुवेणाभिघार्य स्तोकेभ्योऽनुब्रूहि इति संप्रेष्यति ॥ १ ॥ श्येनीँ भृतां बर्हिष्यासादयति सुपिप्पला ओषधीस्कृधि इति ॥ २ ॥ वपाश्रपण्यौ विप्रमुच्योत्तमेन प्रयाजेन प्रचरति ॥ ३ ॥ स्वाहाकृतिभ्यः प्रेष्य इति संप्रेष्यति ॥ ४ ॥ हुत्वा ध्रुवां पृषदाज्यँ वपामित्यभिघारयति ॥ ५ ॥ यथाकाम्याज्यभागयोर्होमे[1] ॥ ६ ॥ सर्वहुतँ वपां जुहोति ॥ ७ ॥ अभितो वपाँ हिरण्यशकलाववद्यति ॥ ८ ॥ स्वाहा देवेभ्यः इति पुरस्ताद्वपायाः स्रुवेण जुहोति । विश्वेभ्यो देवेभ्यः स्वाहा इत्युपरिष्टात् ॥ ९ ॥ इन्द्राग्निभ्यां छागस्य वपाया मेदसोऽनुब्रूहि ॥ इन्द्राग्निभ्यां छागस्य वपाया मेदसः प्रेष्य इति संप्रेष्यति ॥ १० ॥

जातवेदो वपया गच्छ देवाँस्त्वँ हि होता प्रथमो बभूव ।
घृतेनाग्ने तन्वँ वर्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥

इति वपाँ हुत्वा स्वाहोर्ध्वनभसम् इति व्यत्यस्ते वपाश्रपण्यावनुप्रहरति । प्राचीमेकशृङ्गां प्रतीचीं द्विशृङ्गाम् ॥ ११ ॥ संपातेनाभिहुत्यायतने स्रुचौ सादयति ॥ १२ ॥ चात्वाल[2] आपोहिष्ठीयेन[2] त्र्यृचेन मार्जयन्ते सहयजमानपत्नीकाः ॥ १३ ॥ अत्रैव मधुमन्थानां कालः ॥ १४ ॥ मुष्टिना शमिता वपोद्धरणमभिधायास्त आ वपाया होमात् ॥ १५ ॥ उखायां पशुँ श्रपयति शूले हृदयम् ॥ १६ ॥ न गुदं निर्लेषयेन्न वनिष्ठुम् ॥ १७ ॥ मेदो मूत उपनह्यति ॥ १८ ॥ ऊवध्यगोहं[3] खात्वोवध्यं गूहति[3] ॥ १९ ॥ व्रीहीणां पशुना समानदेवतं पशुपुरोडाशँ श्रपयति ॥ २० ॥ शृते पशौ पुरोडाशेन प्रचरति ॥ २१ ॥ इन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहि ॥ इन्द्राग्निभ्यां पुरोडाशस्य प्रेष्य इति संप्रेष्यति ॥ २२ ॥ अग्नयेऽनुब्रूहि इति । अग्नये प्रेष्य इति स्विष्टकृते ॥ २३ ॥ इडान्तं कृत्वा

१. Thus B, N; CR °र्होमः
२. B, N चात्वाल्मापो°
३-३. B, N ऊवध्यगोह खात्वोवध्य गुपति

पृषदाज्यस्य स्रुवेणोपहत्य परैति ॥ २४ ॥ शृतँ हविः शमिता इति पृच्छति ॥ २५ ॥ शृतम् इति शमिता प्रत्याह ॥ २६ ॥ समयाऽध्वे द्वितीयम् । प्राप्य तृतीयम् ॥ २७ ॥ उत्तरतोऽवस्थाय हृदयमवधाय जुष्टं देवेभ्यः इत्यभिघार्य विवाजिनं कृत्वान्तरा यूपाहवनीयावतिहृत्य दक्षिणतः पञ्चहोत्रोपसादयति ॥ २८ ॥ जुहूपभृतोर्वसाहोमहवन्याँ समवत्तधान्यामित्युपस्तीर्य प्लक्षशाखायाँ हृदयमवधायाक्तयावद्यन् मनोतायै हविषोऽवदीयमानस्यानुब्रूहि इति संप्रेष्यति ॥ २९ ॥

॥ इति पशुषु षष्ठेऽध्याये[1] षष्ठं[2] खण्डम् ॥

हृदयस्य जिह्वायाः क्रोडस्य सव्यस्य[3] कपिललाटस्य पार्श्वयोर्यक्नो वृक्कयोर्दक्षिणस्याः श्रोण्या गुदतृतीयमिति द्विर्द्विरवदाय जुह्वामवद्यति ॥ १ ॥ त्रिधा गुदँ विछिद्यास्याणीयसो दैवताभ्योऽवद्यति ॥ २ ॥ स्थविष्ठं[4] गुदस्योपयड्भ्यो निदधाति ॥ ३ ॥ दक्षिणस्य कपिललाटस्य पूर्वार्धात् मध्यमं गुदतृतीयँ सव्यायाः श्रोण्या जघनार्धात् सकृत्सकृदुपभृति स्विष्टकृते ॥ ४ ॥ यूषे मेदः परिप्लाव्य त्रैधँ विछिद्य जुहूपभृतौ प्रछादयति ॥ ५ ॥ शेषमिडायाम्[5] ॥ ६ ॥ अभितो दैवतानि हिरण्यशकलाववद्यति ॥ ७ ॥ रेडसि इति स्वधितिना वसाहोमं प्रयौति ॥ ८ ॥ प्रयुता द्वेषाँसि इति पार्श्वेन[6] ॥ ९ ॥ आपस्त्वा समरिण्वन् इति गृहीत्वा पार्श्वेनापिदधाति ॥ १० ॥ अनुसुँ[7] षडिडामवद्यति[8]

१. B, N omit
२. B, N षष्ठमं
३. B, N मध्यस्य
४. Thus N; CR स्थविष्ठ
५. CR reads sūtras 6–7 as one sūtra.
६. CR reads sūtras 9–10 as one sūtra. cf. BhārŚS VII. 20.1
७. ? Probably the Sūtrakāra refers to the six organs mentioned in sūtra 1 infra beginning with हृदयस्य and ending with पार्श्वयोः.
८. Thus N, CR; B दिडा°

वनिष्ठुँ सप्तमम् ॥ ११ ॥ क्लोमानं[१] पुरीततमिति संकृत्य[२] वर्धयित्वेडाँ यूषेणोपसिच्य प्रतिपरीत्य प्रचरति ॥ १२ ॥ इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहि ॥ इन्द्राग्निभ्यां छागस्य हविषः प्रेष्य इति संप्रेष्यति ॥ १३ ॥ घृतं घृतपावानः इत्यर्धर्चे याज्यायां[३] वसाहोमं जुहोति ॥१४॥ पृषदाज्येन सकृदवत्तेन[४] वनस्पतिँ यजति ॥ १५ ॥ वनस्पतयेऽनुब्रूहि ॥ वनस्पतये प्रेष्य इति संप्रेष्यति ॥ १६ ॥ वसाहोमशेषेण[५] दिशः प्रति यजति दिशः स्वाहा इति पर्यायैः प्रतिदिशम् । मध्ये पञ्चमेन पूर्वार्धे[६] षष्ठेन[७] ॥ १७ ॥ औपभृतं जुह्वामवनीय स्विष्टकृता प्रचरति ॥ १८ ॥ ऐन्द्रः प्राणः इति यजमानः पशुँ संमृशत्यवत्तानवत्तम्[८] ॥ १९ ॥ उपहूतायामिडायामध्यूध्नीँ होत्रे हरन्ति ॥ २० ॥ वनिष्ठुमग्नीध आदधाति यथाग्नीध्रभागम्[९] ॥ २१ ॥ दक्षिणासंमार्जनसंप्रैषमुक्त्वा[१०] अग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीदस्व इति संप्रेष्यति ॥ २२ ॥ शामित्रादाग्नीध्रोऽङ्गारान् पश्चार्धे वेद्या व्युह्योपसमादधाति

१. CR has suggested that perhaps प्लीहानं is fallen out.

२. N स्कृत्य

३. B, N याज्यया

४. Thus emended. B, N, CR सकृदेव तेन. cf. MānŚS I.8.5.30; BhārŚS VII. 20.10

५. Thus emended; B, N, CR वसामशेषेण. CR suggested वसाशेषेण.

६. B, N पूर्वार्धं

७. CR reads sūtra 17 as two sūtras, the first ending with प्रतिदिशम्.

८. Thus emended; B, N अवतानवंत; CR अवदानवन्तम् cf. MānŚS I. 8.5.34; BhārŚS VII. 19.15

९. B, N यथा अग्नीध्रभाग

१०. B, N, CR दक्षिणासन्मार्जनसंप्रैष (CR प्रेष). Probably the Sūtrakāra referred to the two calls mentioned in VārŚS I 3.5.10 and 15

॥ २३ ॥ उत्तरतो दक्षिणामुख उपविश्य तस्मिन् प्रतिप्रस्थातोपयजति[1] ॥ २४ ॥ गुदकाण्डमेकादशधा संभिन्दन्नवदाय वषट्कारान्तेष्वनुयाजानामेकैकँ हस्तेन जुहोति ॥ २५ ॥ समुद्रं गच्छ स्वाहा इति पर्यायैरेकादश हुत्वा मनो हार्दिँ यच्छ इति हृदयदेशमभिमृशति ॥२६॥ ओषधीभ्यस्त्वा इति दर्भेषु लेपं[2] निमार्ष्टि ॥ २७ ॥ अपः स्पृष्ट्वा पृषदाज्येनानुयाजान् यजति ॥२८॥ देवेभ्यः प्रेष्य इति प्रथमे संप्रेष्यति । प्रेष्य इत्युत्तरान् ॥२९॥ एकादशभिः प्रचर्य स्वरुं जुह्वां त्रिरुपरिष्टात्[3] त्रिरधस्तादक्त्वादधाति दिवं ते धूमो गच्छतु इति ॥ ३० ॥ ऊर्ध्वं स्वरुहोमात् प्रागनुदेशाद्यूपो नोपस्पृश्यः ॥३१॥ सूक्तवाके सूक्ता प्रेष्य इति संप्रेष्यति ॥ ३२ ॥ जाघन्या पत्नीः सँयाजयन्ति ॥ ३३ ॥ उत्तानाया देवानां पत्नीभ्योऽवद्यतीडां चाग्नये गृहपतये चाग्नीघे च ॥ ३४ ॥ यज्ञं गच्छ स्वाहा इति पर्यायैस्त्रीणि समिष्टयजूँषि जुहोति ॥ ३५ ॥ पुरस्तान्नित्यस्य तृतीयः स्वाहाकारः ॥३६॥ पूर्णपात्रस्थाने शूलेनावभृथँ यन्ति ॥ ३७ ॥ परोगोष्ठँ[4] यदार्द्रमनुदकमनौषधिकं च तस्मिन् शमितोपवपति ॥३८॥ शुगसि यं द्विष्मस्तमभिशोच इत्युपोप्यमानमनुमन्त्रयते ॥ ३९ ॥ धाम्नो धाम्नो राजन् इत्यान्तादनुवाकस्याध्यधि चात्वालं[5] मार्जयित्वा[6] समिधः कृत्वानपेक्षमाणाः प्रत्यायन्ति ॥४०॥ एधोऽस्येधिषीमहि स्वाहा इत्याहवनीये समिधमादधाति ॥४१॥ समिदसि समेधिषीमहि इति द्वितीयाम् ॥ ४२ ॥....[7]

[ ॥ इति पशुषु षष्ठेऽध्याये सप्तमः खण्डः ॥ ]

[ ॥ इति षष्ठोऽध्यायः ॥ ]

---

१. CR reads sūtras 24-25 as one sūtra.
२. Thus N; CR omit
३. B, N त्रिः पुरस्तात्
४. B, N पुरोगोष्ठँ
५. CR added by conjecture
६. B, N माश्रपयित्वा
७. The remaining portion is wanting in B, N

# चातुर्मास्यानि

[1]... तत्सत्यं तच्छकेयं तेन शकेयं तेन राध्यासम् इति यजमानो जपति ॥ १ ॥ चतुरो मासान्न मांसमश्नीयान्न स्त्रियमुपैति नोपर्यास्ते जुगुप्सतेऽनृतात्[2] प्राङ् शेते मध्वश्नात्यृतौ भार्यामुपैति ॥ २ ॥ सर्वेष्वन्तरालव्रतानि ॥ ३ ॥ वैश्वदेवेनोत्तराणि[3] सहपञ्चसंचराणि[4] पर्वाणि व्याख्यातानि ॥ ४ ॥ विकारान् व्याख्यास्यामः[5] ॥ ५ ॥

॥ इति चातुर्मास्येषु सप्तमेऽध्याये[6] प्रथमं खण्डम् ॥

चतुर्षु मासेषु वरुणप्रघासाः ॥ १ ॥ प्रतिप्रस्थातामिक्षायै मारुत्यै वत्सानपाकरोति । अध्वर्युर्वारुण्यै ॥ २ ॥ प्रतिप्रस्थातुः पयसि पूर्वं[7] कर्माध्वर्योरारात्[8] ॥ ३ ॥ पूर्वेद्युरग्निप्रणयनम्[9] ॥ ४ ॥ वेदी कुरुतः । उत्तरामध्वर्युर्दक्षिणां प्रतिप्रस्थाता ॥ ५ ॥ असंभिन्ने समे ॥ ६ ॥ पृथमात्रमन्तरा ॥ ७ ॥ उत्तरस्यामुत्तरवेदिः[10] ॥ ८ ॥ संभारान्न्युप्याहव-

१. B, N have a lacuna at the beginning which commences with the ending portion of the preceding chapter. The enumeration of the following sutras is purely temporary and is intended for easy reference.
२. Thus N; CR जुगुप्सेता°
३. Thus N; CR वैश्वदेवोत्तराणि
४. CR breaks the sūtra here. cf. VārŚS I. 7.5.24
५. cf. VārŚS I 7.5.25
६. B, N omit
७. N, CR पूर्वं
८. CR reads sūtra 3 as two sūtras, the first ending with पयसि.
९. B, N °द्युरभि°
१०. Thus B, N; CR °वेदि ( संभारा° )

नीयादग्नी प्रणयतः[१] ॥ ९ ॥ अग्निभ्यां प्रणीयमानाभ्यामनुब्रूहि इति संप्रेष्यति ॥ १० ॥ अग्रेणोत्तरां वेदिं प्रतिप्रस्थाता[२] ॥ ११ ॥ अन्तरा वेदी प्रतिप्रस्थाता पात्राणि प्रयुनक्ति ॥ १२ ॥ अविनिर्देशे समानमुभयोः कर्म ॥ १३ ॥ यथा वैश्वदेवे हवीँष्योषधपात्राणि ॥ १४ ॥ आमन्त्रणादि प्रणीताः संप्रैषान्मारुतीवर्जं निर्मन्थ्यं प्रचरतिमिडामिति । अध्वर्युरेव पत्नीसँयाजप्रभृति ॥ १५ ॥ समानो होता ब्रह्माग्नीध्र उत्करः ॥ १६ ॥ पञ्च संचराण्यैन्द्राग्नो द्वादशकपालो मारुत्यामिक्षा वारुण्यामिक्षा काय एककपालो वाजिनाँ[३] वाजिनमिति हवीँषि ॥१७॥ निरुप्तेषु प्रतिप्रस्थाता तूष्णीको यवान्न्युप्यामपेषाणा[४] करम्भपात्राणि करोति प्रतिपुरुषँ यजमानस्यैकं चाङ्गुष्ठपर्वमात्राण्येकोद्धीनि ॥ १८॥ शमीपर्णैः पूरयित्वा शेषस्य मेषं च मेषीं च कुरुतः ॥ १९ ॥ निक्ताभिरूर्णाभिरावेष्टय परःशतानि शमीपर्णानि घासं निवपतः ॥ २० ॥ उत्तरैः परिग्राहैः परिगृहय दक्षिणस्या वेद्या उत्तरस्याः श्रोण्या अध्युत्तरस्या आ दक्षिणस्मादँसात्[५] स्फ्येन वेदी संभिनत्ति ॥२१॥ पृषदाज्ये गृहीतः । सकृदुपस्तीर्य द्विर्दधि । द्विरभिघारयेत् ॥ २२ ॥ उद्वासनवेलायामामिक्षयोः खर्जूरसक्तूनावपतः ॥२३॥ मारुत्यां प्रतिप्रस्थाता मेषमवदधाति वारुण्यामध्वर्युर्मेषीम् ॥ २४ ॥ आसादयन्तौ विपरिहरतः ॥ २५ ॥ वारुणीनिष्काषं निदधाति ॥ २६ ॥ उत्तरस्मिन्नग्नौ संमृष्टेऽसंमृष्टे दक्षिणस्मिन् प्रतिप्रस्थाता पत्नीं पृच्छति कतिभिर्मिथुनमचरः[६] इति ॥ २७ ॥ सत्यँ विवाचयिषेत् ॥ २८ ॥ यान् निर्दिशेत्

१. CR reads sutras 8–9 as one sūtra.

२. CR does not break the sūtra here, but after प्रतिप्रस्थाता in the next one.

३. Thus N; CR omit

४. B, N °मयेवानां

५. Thus N; CR दक्षिणादँ° cf. sūtras 27 and 30

६. B, N °मचरद्

तान् वरुणो गृह्णातु इति ब्रूयात् ॥ २९ ॥ प्रघास्यान् हवामहे इति करम्भपात्राण्यादाय यजमानः पत्नी चापरेण विहारमनुपरिक्रम्य पुरस्तात् प्रत्यञ्चौ तिष्ठन्तौ शिरस्याधाय दक्षिणस्मिन्नग्नौ शूर्पेण जुहुतः ॥ ३० ॥ मो षू णः इति यजमानः पुरोनुवाक्यां जपति ॥ ३१ ॥ यद् ग्रामे इत्युभौ याज्यां निगद्य जुहुतः ॥ ३२ ॥ अक्रन् कर्म इति व्युत्क्रामन्तावनुमन्त्रयेते ॥ ३३ ॥ अध्वर्युर्वा जुहुयादन्वारभेयातामेतौ ॥ ३४ ॥ आज्यभागाभ्यां प्रचर्य स्रुक्पाणिः प्रतिप्रस्थाताकाङ्क्षति यावदध्वर्युरैन्द्राग्नषष्ठैः प्रचरति ॥ ३५ ॥ मारुत्याः[१] प्रतिप्रस्थाता पूर्वेणावदानेन सह मेषीमवद्यति । वारुण्या अध्वर्युरुत्तरेण सह मेषम् ॥ ३६ ॥ इडावत्सरीयां स्वस्तिमाशासे इति यजमानो जपति ॥ ३७ ॥ मिथुनौ गावौ दक्षिणा ॥ ३८ ॥ समवनीय वाजिनं भक्षयति । उपास्ते प्रतिप्रस्थाता ॥ ३९ ॥ पत्नीसँयाजान् समिष्टयजुरध्वर्युर्जुहोति यथा पशुबन्धे ॥ ४० ॥ तूष्णीं प्रतिप्रस्थाता स्रुचँ विक्षारयति ॥ ४१ ॥ वारुणीनिष्काषेण[२] तुषैश्चावभृथँ यन्ति यथा सोमे साम ऋजीषभक्षणँ स्नानमिति परिहाप्य ॥ ४२ ॥ निवर्तयते यद् घर्मः पर्यवर्तयदन्तान् पृथिव्या अधि[३] ॥ ४३ ॥ अग्निस्तिग्मेन इति समानम् ॥ ४४ ॥

॥ इति चातुर्मास्येषु सप्तमेऽध्याये[४] द्वितीयं खण्डम् ॥

चतुर्षु मासेषु साकमेधाः ॥ १ ॥ पूर्वां पौर्णमासीमानीकवतायोपवसेदुत्तरां क्रैडिनीयाय[५] ॥ २ ॥ अग्नयेऽनीकवते प्रातरष्टाकपालो मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुर्मरुद्भ्यो गृहमेधेभ्यः सर्वासां दुग्धे

१. B, N मारुत्य
२. B °निस्काशेण; N °निष्काशेण
३. CR reads sūtras 43–44 as a single sutra.
४. B, N omit.
५. B, N क्रैडिनीयाग्नये

सायमोदन इन्द्रस्य निष्काषः[१] ॥ ३ ॥ यजुषा वत्सानपाकरोति ॥ ४ ॥ अपवित्रे दोहयति ॥ ५ ॥ नेध्माबर्हिः संनह्यति ॥ ६ ॥ नोपभृत्याज्यं गृह्णाति ॥ ७ ॥ ओदनस्य शरोनिष्काषं निदधाति ॥ ८ ॥ त्रीनोदनानुद्धृत्योत्पूयालंकरोति[२] ॥ ९ ॥ न सामिधेनीरन्वाह ॥ १० ॥ न प्रयाजान् यजति ॥ ११ ॥ आज्यभागाभ्यां प्रचर्यौदनानां सकृत्सकृत्समवदाय प्रचरति ॥ १२ ॥ इडान्ता भवति ॥ १३ ॥ अमात्येभ्य ओदनानुपहरन्ति ॥ १४ ॥ प्रतिवेशमोदनं पचति ॥ १५ ॥ तस्य पत्न्यश्नाति ॥ १६ ॥ आज्याभ्यज्य सुहिता वसन्ति ॥ १७ ॥ ओदनान् प्रतिवेशान्[३] पचन्ते गाश्च घ्नते ॥ १८ ॥ सवत्सा गावो वसन्ति ॥ १९ ॥ प्राचीनरात्रेऽभिवान्याया अग्निहोत्र्याश्च वत्सौ बध्नन्ति ॥ २० ॥ पुरा प्रातरग्निहोत्राद्गार्हपत्ये शरोनिष्काषपूर्णां दर्वीं जुहोति[४] पूर्णा दर्वे परापत इति ॥ २१ ॥ ऋषभमाह्वयते[५] ॥ २२ ॥ यदृषभो न रूयाद् ब्रह्मा ब्रूयात् जुहुधि इति ॥ २३ ॥ मरुद्भ्यः क्रीडिभ्यः साकं रश्मिभिः सप्तकपालं निर्वपेत् प्रचरेद्वा ॥ २४ ॥ महाहविषा यजते सोत्तरवेदिमग्निं प्रणीय ॥ २५ ॥ पञ्च संचराण्यैन्द्राग्नो द्वादशकपाल इन्द्राय वृत्रघ्ने चरुर्वैश्वकर्मण एककपाल इति हवींषि ॥ २६ ॥ पुरस्तात् स्विष्टकृतः अग्ने वेर्होत्रम् इत्याघारयति[६] ॥ २७ ॥ ऋषभो दक्षिणा ॥ २८ ॥

॥ इति चातुर्मास्येषु सप्तमेऽध्याये[७] तृतीयं खण्डम् ॥

---

१. B, N निष्काशो

२. Thus emended; B, N °त्योत्युपालं; CR °त्योत्पूतान्करोति

३. Thus emended; B, CR प्रतिवेशा; N प्रतिवेशाः

४. Thus N; CR omit

५. CR reads sutras 21-22 as a single sūtra.

६. Thus N; CR इत्यभिघा° cf. MānŚS I. 7.5.33

७. B, N omit

पितृयज्ञेऽग्रेण दक्षिणाग्निं वेदिमुद्धरन्ति[1] ॥ १ ॥ अखाता भवति ॥ २ ॥ प्रागुदीचीनं स्तम्बयजुर्हरति ॥ ३ ॥ समन्तं चतुरस्रं[2] परिश्रयति ॥ ४ ॥ उत्तरां प्रति वेदिश्रोणिं द्वारं कुर्वन्ति ॥ ५ ॥ एकोल्मुकं मध्ये वेद्याः सादयति ॥ ६ ॥ स आहवनीयः ॥७॥ वर्षीयो नित्याद् बर्हिरुपमूललूनं वर्षीयानिध्मः ॥ ८ ॥ अग्रेण नित्यमाहवनीयमतिहारः ॥९॥ उत्तरतो वेद्याः पात्राणि प्रयुनक्ति ॥ १० ॥ दक्षिणतो निर्वपति ॥११॥ सोमाय पितृमते षट्कपालः पुरोडाशः पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्यो मन्थः ॥ १२ ॥ तूष्णींकाँस्त्र्यम्बकान् पुरोडाशानेककपालान् प्रतिपुरुषं यजमानस्यैकाधिकान् ॥ १३ ॥ प्रोक्षणीस्तिग्रान्[3] यवानवघ्नन्ति ॥ १४ ॥ दक्षिणार्धे गार्हपत्यस्य पुरोडाशं श्रपयत्युत्तरार्धे त्र्यम्बकान् ॥ १५ ॥ दक्षिणाग्नौ यवान् भृज्जति[4] ॥१६॥ पेषणवेलायां धानामन्त्रेण विभजति ॥ १७ ॥ अभिवान्यायाः[5] पयसि[6] मन्थं दोहन इक्षुशलाकया प्रसव्यमालोडयति ॥ १८ ॥ शलाकास्थं मन्थं करोति ॥ १९ ॥ चतुर्गृहीतान्याज्यान्यध्यधि गार्हपत्यं गृह्णाति ॥ २० ॥ तूष्णीं प्रस्तरमुद्धवमादत्ते ॥ २१ ॥ समन्तं बर्हिस्त्रिः स्तृणन् पर्येति ॥ २२ ॥ अया विष्ठा इति[7] त्रिरस्तृणन् प्रतिपर्येति ॥ २३ ॥ एकैकमभ्युदाहरत्याज्यान्यग्रतः[8] परिषेचनाय ॥ २४ ॥ अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहि इति संप्रेष्यति ॥ २५ ॥ उशन्तस्त्वा हवामहे इत्येका सामिधेनी ॥ २६ ॥ तस्यां त्रिरुक्तायाँ

---

१. Thus N; CR °मुद्धरति
२. N समंत°; CR समं चतुरश्रं
३. B, N प्रोक्षणीः स्तिग्रान्
४. B भृंजति; N भृंजंति
५. B अभिनवान्याय; N अभिनवान्याया
६. B, N पयति
७. CR sūtra 22 ends here. See sūtra 54 *supra*.
८. Thus emended; B, N, CR आज्येनाग्रतः cf. MānŚS I 7.6.21

सकृदिध्ममादधाति ॥ २७ ॥ न होतारँ वृणीते नार्षेयम् ॥ २८ ॥ अपबर्हिषः प्रयाजान् यजति ॥ २९ ॥ आज्यभागाभ्यां प्रचर्य प्राचीनावीतानि कुर्वते ॥ ३० ॥ विपरिहरन्ति हवीँषि ॥ ३१ ॥ विपरियन्त्यृत्विजः ॥ ३२ ॥ यथास्थानं जुहूः ॥ ३३ ॥ उपभृद्ध्रुवे दक्षिणे ॥ ३४ ॥ यथास्थानं पुरोडाशं दक्षिणा धाना मन्थं दक्षिणतः ॥ ३५ ॥ आग्नीध्रः प्रत्याश्रावयति ॥ ३६ ॥ अपरो यजमानः ॥ ३७ ॥ दक्षिणतोऽध्वर्युरवद्यति त्रिश्चतुरवदानस्य चतुः पञ्चावदानस्य ॥ ३८ ॥ उदङ्ङतिक्रामँ सोमाय पितृमतेऽनु स्वधा इत्यनुवाचयति ॥ ३९ ॥ ओ स्वधा इत्याश्रावयति ॥ ४० ॥ अस्तु स्वधा इति प्रत्याश्रावयति ॥ ४१ ॥ सोमं पितृमन्तँ स्वधा इति संप्रेष्यति ॥ ४२ ॥ स्वधा नमः इति वषट्कारः ॥ ४३ ॥ दक्षिणामुखो दक्षिणार्धे जुहोति ॥ ४४ ॥ एतेन धर्मेण स्विष्टकृदन्तैः प्रचरति ॥ ४५ ॥ अग्निः कव्यवाहनः इति स्विष्टकृत् ॥ ४६ ॥ मन्यादीनामिडामवद्यति ॥ ४७ ॥ ब्रह्माग्नीध्रो यजमान इत्यवघ्रेण भक्षयित्वेडाँ हविःशेषाँश्च त्रीन् पिण्डान् कृत्वा स्रक्तिषु प्रसव्यं निदधाति यथा पिण्डपितृयज्ञ उत्तराँ श्रोणीं परिहाप्य ॥ ४८ ॥ तस्यां लेपान्निमार्ष्टि ॥ ४९ ॥ अत्र पितरो मादयध्वम् इत्युक्त्वा परेत्य सुसंदृशं त्वा वयम् इत्याहवनीयमुपातिष्ठन्ते ॥ ५० ॥ योजा न्विन्द्र ते हरोम् इति प्रणवेन ताम्यन्ते ॥ ५१ ॥ यदन्तरिक्षम् इति गार्हपत्यम् ॥ ५२ ॥ अमीमदन्त पितरः इति परिश्रितं प्रपद्याञ्जनाभ्यञ्जनदशानिह्नवनमिति[1] कृत्वा परेतन पितरः इति त्रिरपः परिषिञ्चन् पर्येति ॥ ५३ ॥ अया विष्ठा इति त्रिरपारिषिञ्चन् प्रतिपर्येति ॥ ५४ ॥ अक्षन्नमीमदन्त इति पङ्क्त्या[2] मनस्वतीभिश्च[2] प्रत्यायन्ति ॥ ५५ ॥ अग्ने तमद्याश्वम् इति गार्हपत्यमुपतिष्ठते ॥ ५६ ॥ अपबर्हिषावनुयाजौ

१. Thus N; CR °निह्नवन°

२. Thus emended; B, N, CR पत्न्यग्नि मनस्वतीश्च cf. MS I. 10.3; 19; VārŚS I. 2.3.33; MānŚS I. 1.2.39–40

यजति[१] ॥ ५७ ॥ देवी यज, यज इति संप्रेष्यति ॥ ५८ ॥ न पत्नीः सँयाजयन्ति[२] ॥ ५९ ॥ न समिष्टयजुर्जुहोति ॥ ६० ॥ समाप्येष्टिं प्रागुदञ्चस्त्र्यम्बकैर्यजन्ति[३] ॥ ६१ ॥ मूते पुरोडाशानुपवपन्ति ॥ ६२ ॥ एकोल्मुकं पराचीनं धूपायमानँ हरन्ति ॥ ६३ ॥ आखुं ते रुद्र पशुं करोमि इत्याखुकिरौ पुरोडाशमेकमुपवपति ॥ ६४ ॥ एकोल्मुकं चतुष्पथ उपसमाधाय पुरोडाशानाँ सकृत्सकृत्समवदायारण्येन पलाशपर्णेन मध्यमेन जुहोति एष ते रुद्र भागः इति ॥ ६५ ॥ अवाम्ब रुद्रमदिमहि इति यजमानोऽमात्यैः सहाग्निं पर्येति ॥ ६६ ॥ पतिकामापि यायात् ॥ ६७ ॥ भगोऽसि भगस्यैषे इत्युदस्य प्रतिलभ्य यजमानाय समावपन्ति ॥ ६८ ॥ पतिकामायै[४] वा ॥ ६९ ॥ त्रिरेतेन धर्मेण ॥ ७० ॥ यथास्वमुपयामम् ॥ ७१ ॥ भेषजं गवे इति द्वितीयं परियन्ति ॥ ७२ ॥ त्र्यम्बकँ यजामहे इति तृतीयम् ॥ ७३ ॥ सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् इति पतिकामा ॥ ७४ ॥ यथाम्नातमितरे ॥ ७५ ॥ मूत उपनह्य वृक्ष आसजति रुद्रैष ते भागः इत्युभयतः ॥ ७६ ॥ अनपेक्षमाणाः प्रत्यायन्ति ॥७७॥ मार्जनँ समिदाधानमिति यथा पशुबन्धे ॥ ७८ ॥ प्राप्यादित्यं घृते चरुं निर्वपति ॥ ७९ ॥ क्रैडिनिप्रभृत्यादित्यान्तं प्रागस्तमयात् क्रियेत ॥ ८० ॥ सँस्थितायां पौर्णमासीँ[६] सँस्थाप्य निवर्तयते योऽस्याः पृथिव्या अधि त्वचि निवर्तयत्योषधीः[५] ॥ ८१ ॥ अग्निस्तिग्मेन इति समानम् ॥ ८२ ॥

॥ इति चातुर्मास्येषु सप्तमेऽध्याये चतुर्थं खण्डम् ॥

---

१. CR reads sūtras 57–58 as a single satra.
२. CR reads sūtras 59–60 as a single sūtra.
३. One expects त्र्यम्बकैश्चरन्ति
४. Thus emended; B, N, CR पतिकामापि
५. CR reads sūtras 81–82 as a single sūtra.
६. B, N omit

चतुर्षु मासेषु शुनासीर्यं सद्यश्चतुरहे मासे वा ॥ १ ॥ पञ्च संचराणि वायव्या यवागूः प्रतिधुगेन्द्राय शुनासीराय द्वादशकपालः सौर्य एककपाल इति हवींषि ॥ २ ॥ सीरं द्वादशायोगं दक्षिणोष्टारो वानड्वान् षड्योगं सीरमुष्टारौ वानड्वाहौ ॥ ३ ॥ निवर्तयते

यत्र मासा अर्धमासा ऋतवः परिवत्सराः ।
येन तेन प्रजापतय ईजानः संनिवर्तयन् ।
तेनाहमस्मि ब्रह्मणा निवर्तयामि जीवसे ॥

इति[1] ॥ ४ ॥ अग्निस्तिग्मेन इति समानम् ॥ ५ ॥ वैश्वदेवेनैव यजेत पशुकामः[2] ॥ ६ ॥ सहस्रं प्राप्योत्तरैः ॥ ७ ॥ शुनासीर्येण ग्रामकामोऽन्नाद्यकामो वृष्टिकामः पशुकामः स्वर्गकामो वा ॥ ८ ॥ वर्ष्यमुदकमन्ववसाय[3] तस्योदकार्थान् कुर्वीत ॥ ९ ॥ सांवत्सरीकाणि ॥ १० ॥ अत्र पञ्च संवत्सराणि[4] ॥ ११ ॥ एतेन धर्मेण फाल्गुन्यारम्भणान् फाल्गुनीसमापनांस्त्रीन्संवत्सरानिष्ट्वा चैत्र्यारम्भणौ चैत्रीसमापनौ द्वौ यजेत ॥ १२ ॥ अथ पशुमन्ति ॥ १३ ॥ वैश्वदेवे सर्वेषु हविःषु यूपाय वैश्वदेवं पशुमुपाकरोति ॥ १४ ॥ यथाकालमविप्रतिषिद्धान्[5] पशुना चातुर्मास्यकान् धर्मान् करोति ॥१५॥ समानं पशुकर्मोत्तमात् प्रयाजात् ॥१६॥ उत्तमेन प्रयाजेन प्रचरति ॥१७॥ ध्रुवादीनि हवींष्यभिघारयति ॥ १८ ॥ सहामिक्षावपमभिघारयति[7] ॥ १९ ॥ आज्यभागाभ्यां प्रचर्य

१. CR reads sūtras 4–5 as a single sūtra.
२. CR reads sūtras 6–7 as a single sūtra.
३. Thus emended; N वरस्यमुदक°; CR उदक° cf. MānŚS IV. 3.3; BhārŚS VIII. 25.7.
४. CR reads sūtras 11–12 as a single sūtra.
५. CR cuts sūtra 15 into two sūtras, the first ending with °प्रतिषिद्धान्.
६. B पशुकामोक्ततात्; N पशुकामोत्तमात्
७. CR °वपामभि°; N omit. cf. sūtras 21, 32 *supra*.

हविर्भिः प्रचरति ॥ २० ॥ सहामिक्षावपेन प्रचरति ॥ २१ ॥ वपायाः संप्रैषाः ॥ २२ ॥ पुरस्तात् स्विष्टकृतः पशुपुरोडाशेन प्रचरति ॥२३॥ सहस्विष्टकृत् प्रैषवान्[1] ॥ २४ ॥ सहेडा[1] ॥ २५ ॥ समानमान्तात् पशुकर्म ॥२६॥ एतेनोत्तराणि सहपञ्चसंचराणि पर्वाणि व्याख्यातानि ॥ २७ ॥ विकारान् व्याख्यास्यामः ॥ २८ ॥ वरुणप्रघासेषूभयत्र यूपौ ॥ २९ ॥ मारुतं प्रतिप्रस्थाता पशुमुपाकरोति वारुणमध्वर्युः ॥ ३० ॥ प्रतिप्रस्थातुः पशौ पूर्वं कर्माध्वर्योरारात् ॥३१॥ प्रतिप्रस्थातामिक्षावपेन पूर्वं प्रचरति ॥ ३२ ॥ समानमुभयोः पशुकर्म ॥ ३३ ॥ एका मनोता ॥ ३४ ॥ प्रतिप्रस्थाता पशुना पूर्वं प्रचरति ॥ ३४ ॥ पशुवर्जमध्वर्योः संप्रैषाः ॥ ३५ ॥ समानेडा ॥ ३६ ॥ साकमेधेष्विन्द्राय वृत्रघ्ने पशुः ॥ ३७ ॥ वायवे नियुत्वते शुनासीर्ये ॥ ३८ ॥ समानमन्यत् समानमन्यत् ॥ ३९ ॥

॥ इति चातुर्मास्येषु सप्तमेऽध्याये[2] पञ्चमं खण्डम् ॥

॥ इति प्राक्सौमिके[3] सप्तमोऽध्यायः ॥

१. Thus N; CR °प्रैषवन्त्सहेडा. CR reads sūtras 24–25 as a single sūtra. cf. sūtra 36 *supra*.

२. B, N omit.

३. CR omit.

# अग्निचयनम्

प्राकृतीषु सँस्थासु षोडशिवर्जमग्निमुत्तरवेद्यां चिन्वीत ॥ १ ॥ सावित्रनाचिकेतो वानग्निर्वोत्तरवेदिं चिन्वीत सत्राहीनेषु ॥ २ ॥ तं चेष्यमाणोऽमावास्यायामुपनीय हविर्जुहूं प्रथमँ संमृज्याष्टगृहीतेनाज्येन[1] युञ्जानः प्रथमम् इति सावित्राण्यूर्ध्वस्तिष्ठञ्जुहोति[2] ॥ ३ ॥ ऋचा स्तोमम् इति द्वितीयां पूर्णाहुतिं पूर्णाम् ॥ ४ ॥ वैणवीमभ्रिं कल्माषीँ सुषिराँ सावित्रप्रभृतिभिरादत्ते । फलग्रहेर्वा वृक्षस्य ॥ ५ ॥ इमामगृभ्णन् इत्यश्वाभिधानीमादाय प्रतूर्तँ वाजिन् इत्यश्वमभिदधाति ॥ ६ ॥ युञ्जाथाँ रासभँ युवम् इत्युत्तरं गर्दभम् ॥ ७ ॥ योगेयोगे इत्यश्वपूर्वा वल्मीकम-भियन्ति[3] ॥ ८ ॥ अग्निं[3] पुरीष्यमङ्गिरस्वदछेम[4] इति पुरुषमायान्तमनु-मन्त्रयते येन[5] संगछेत[5] ॥ ९ ॥ तम्[6] इति[6] निर्दिशति[7] ॥ १० ॥ आगत्य[7] वाज्यध्वानम् इति मृदं प्राप्य जपति ॥११॥ आक्रम्य वाजिन् इत्यश्वेन मृदमाक्रमयति ॥१२॥ यं द्विष्यात्तं ब्रूयाद् अमुमभितिष्ठ इति ॥ १३ ॥ द्यौस्ते पृष्ठम् इत्यश्वस्य पृष्ठमभिमृशति ॥ १४ ॥ उत्क्राम ॥ उदक्रमीत् इत्युत्क्रान्ते[8] जपति ॥ १५ ॥ आ त्वा जिघर्मि इति पदे हिरण्यं निधायाभिजुहोति ॥ १६ ॥ परि वाजपतिः इत्यभ्या पदं

१. Thus N; CR °ज्याहतगृहीते°.

२. CR reads sūtras 3–4 as a single sūtra.

३. B, N वल्मिकायवत्यग्निं; CR वल्मीकाममियन्ति ॥ अग्निं.

४. CR remarks that "very probably one sūtra is missing" cf. ManŚS VI 1.1. 11–12.

५. B, N वासंगछे.

६. B, N तामिति.

७. N निदेयत्यागत्य.

८. B, N °त्युदक्रान्ते

परिलिखति ॥ १७ ॥ देवस्य त्वा इति खनति ॥१८॥ अपां पृष्ठमसि इति पुष्करपर्णमाहरति ॥ १९ ॥ शर्म च स्थः इति कृष्णाजिनं च पुष्करपर्णं च सँस्तृणाति ॥ २० ॥ व्यचस्वती सँवसेयाम् इत्युत्तरलोम कृष्णाजिनमधस्तादधि पुष्करपर्णम् ॥ २१ ॥ तयोर्मृदं संभरति । पुरीष्योऽसि इति यजुरुत्तराभिर्गायत्रीभिर्ब्राह्मणस्योत्तराभिस्त्रिष्टुब्भी राजन्यस्योत्तराभिर्जगतीभिर्वैश्यस्य ॥ २२ ॥ सर्वत्र यजुः ॥ २३ ॥ यं कामयेत ऋध्नुयादिति तस्य गायत्रीभिश्च त्रिष्टुब्भिश्चाष्टभिश्च संभरेत् ॥ २४ ॥ अयं ते योनिर्ऋत्वियः[1] इति संभृतमभिमृश्य अपो देवीः इति स्फ्येन खनति ॥ २५ ॥ वल्मीकवपामाधाय सुजातो ज्योतिषा इति मौञ्जेन दाम्नोपनहयत्यर्कमयेण वा[2] ॥ २६ ॥ उदु[2] तिष्ठ स्वध्वर[3] इत्युद्यच्छति[3] ॥ २७ ॥ सजातो गर्भः इति हरति ॥ २८ ॥ स्थिरो भव वीड्वङ्गः इति गर्दभ आदधाति ॥ २९ ॥ भरन्नग्निम् इति यन्ति ॥ ३० ॥ ओषधयः प्रतिगृभ्णीत इति परिस्तृणाति ॥ ३१ ॥ दर्भेषु सादयति ॥ ३२ ॥ वि पाजसा इति विस्रँसयति । वि ते मुञ्चामि इति च ॥ ३३ ॥ आपो हि ष्ठा इत्यद्भिरुपसृजति ॥ ३४ ॥ अजलोमभिः कृष्णाजिनलोमभिरर्मकपालैः[4] शर्कराभिः सिकताभिर्वेण्वङ्गारैरिति लोमवर्जं चूर्णकृतैः मित्रः सँसृज्या इति सँसृजति ॥ ३५ ॥ सँसृष्टयोखां[5] पत्नी करोति ॥ ३६ ॥ मखस्य शिरोऽसि इति पिण्डमभिमन्त्र्य वसवस्त्वा कृण्वन्तु इति त्र्युद्धिं चतुरस्रां करोति ॥ ३७ ॥ उत्तमे तृतीये अदित्या रास्नासि इति रास्नां करोति ॥३८॥ अश्रीणां[6] रास्नायाश्च[6] समवाये स्तनौ कृत्वा अदितिष्टे बिलं गृभ्णातु

---

१. B योनिरितिखनति; N योनिरिनिखति.
२. B चोदु; N चोदय.
३. B, N स्व °रित्युद्यच्छति.
४. B, N °र्मकपालिनीकाभिः
५. Thus emended; B, N, CR सँसृष्टासोखा.
६. B, N अग्निकृष्णा.

इति द्वारं करोति ॥ ३९ ॥ कृत्वाय सा महीम् इत्यभिमन्त्र्य सिकतासु विषजति[1] ॥ ४० ॥ शेषस्याषाढां त्र्यालिखितामिष्टकां करोति ॥४१॥ शुष्कामुखाँ वसवस्त्वा धूपयन्तु इत्यश्वशकेन गार्हपत्ये धूपयति ॥४२॥ अदितिष्ट्वा इति गर्तं खात्वा देवानां त्वा पत्नीः इत्यवदधाति ॥ ४३ ॥ तूष्णीमुखाँ[2] पचनेन पर्युक्ष्य धिषणा त्वा देवी इत्यग्निना समिन्द्धे ॥ ४४ ॥ ग्नास्त्वा देवीः इति पच्यमानामनुमन्त्रयते । मित्रैतां त[3] उखां परिददाम्यभित्त्या[3] एषा मा[4] भेदि इति[4] च ॥ ४५ ॥ मित्रस्य चर्षणीधृतः इत्यागामम् ॥ ४६ ॥ देवस्त्वा सवितोद्वपतु इति पक्वामुद्वपति ॥ ४७ ॥ उत्तिष्ठ बृहती भव इत्युच्छ्रयति ॥ ४८ ॥ मित्रैतां ते इत्यभिमन्त्र्य वसवस्त्वाछृन्दन्तु इत्यजक्षीरेणाछृणत्ति चतुः ॥ ४९ ॥ वैश्यस्य राजन्यबन्धोर्वा शिर आहरतीषुहतस्याशनिहतस्य वा ॥ ५० ॥ सप्त माषानुपन्युप्य यमगाथा गायति

योऽस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी ।
यमं भङ्गश्रवो गाय यो राजानपरोध्यः ॥
यमं गाय भङ्गश्रवो यो राजानपरोध्यः ।
अहरहर्नयमानो गामश्वं पुरुषं यमः ॥
वैवस्वतो न तृप्यति सुराया इव दुर्मदः ।
येनापो नद्यो धन्वानि येन द्यौरुग्रा पृथिवी च दृढा ॥

इति ॥ ५१ ॥ वल्मीकवपाँ सप्तधा वितृण्णाँ शिरसः स्थाने प्रतिनिदधाति ॥ ५२ ॥ अयँ योऽसि यस्य त इदँ शिर एतेन त्वँ शीर्षण्वानेधि । इदमस्माक[5] भुजे भोग्याय भूयात् इति शिर आददीत ॥ ५३ ॥

॥ इति चयने प्रथमेऽध्याये[6] प्रथमं खण्डम् ॥

---

१. B, N विसृजति.
२. B तूष्णीमुखाया; N तूष्णीमिखाय.
३–३. B, N मित्रैता त्वा उप चाभित्या.
४–४. B, N मभिनत्ति.
५. B, N इदमहमस्माकं.
६. B, N omit.

हिरण्यकेशान् सुधुरान् हिरण्याक्षानयःशफान् ।
अश्वाननश्वतो दानँ यमो राजाधितिष्ठति ॥

इत्याहरति ॥ १ ॥ मृदा[1] प्रलिम्पति[1] ॥ २ ॥ पौर्णमास्यां पञ्च पशूनालभतेऽश्वमृषभँ[2] वृष्णिं बस्तं प्राजापत्यं तूपरमिति मुष्करान् ॥ ३ ॥ उपाकरोति अग्निभ्यः कामाय जुष्टम् इति ॥ ४ ॥ वैश्वानरीयो द्वादशकपालः पशुपुरोडाशः ॥ ५ ॥ चतुर्विँशतिँ सामिधेनीः पराचीरन्वाह ॥ ६ ॥ एकादश नित्याः उपेमसृक्षि इति तिस्रः समास्त्वाग्ने इति दश ॥ ७ ॥ 'अमुत्र भूयात्' ( मै. सं. ३.४.६ ) इत्यामयाविनः ॥ ८ ॥

राये अग्ने महे त्वा दानाय समिधीमहि ।
ईडिष्वा हि महि वृषन्नग्ने होत्राय पृथिवीम् ॥

इत्यनामयाविनः ॥ ९ ॥ हिरण्यगर्भः इत्याघारः ॥१०॥ ऊर्ध्वा अस्य समिधः इत्याप्रीः ॥ ११ ॥ पुरुषशिरसा सह पर्यग्निं कृत्वा तान् पर्यग्निकृतानुत्सृज्य प्राजापत्यवर्जँ शिराँसि प्रछिद्य यस्माद्रुदादिष्टकाः करिष्यन् स्यात्तस्मिन्[3] शरीराणि न्यस्य बह्वथा[3] मृदा शिराँसि प्रलिप्य प्राजापत्येन तन्त्रँ सँस्थापयन्ति ॥१२॥ यद्येतान्नालभेत वायवे नियुत्वते श्वेतं तूपरमजमालभेत ॥ १३ ॥ प्राजापत्यो द्वादशकपालः पशुपुरोडाशः ॥१४॥ समानमन्यत् ॥१५॥ आग्नावैष्णव एकादशकपाल आदित्येभ्यो घृते चरुरग्नये च वैश्वानराय द्वादशकपाल इति दीक्षणीया ॥ १६ ॥ समानमा दीक्षाहुतिभ्यः पूर्णाहुतिवर्जम् ॥ १७ ॥ आध्वरिकीर्हुत्वा आकूतमग्निम् इति षडाग्निकीर्जुहोति ॥ १८ ॥ अन्ततः[4] पूर्णाहुतिः ॥ १९ ॥ पुरस्ताद्प्राचीयमस्याहवनीय उखां प्रवृणक्ति मा सु भित्थाः

---

१. B, N पूर्वशिरुण्याहृति; CR पूर्वमुख्याहृतिः cf. ManŚS VI. 1.2.26; ĀpŚS XVI. 6.7.

२. B, N °नायजते°

३-३. B. N. स्यात्तस्मात्सरीराण्यस्य वहुन्य.

४. B. N. अंतः

इति ॥ २० ॥ 'जातमवदध्यात्' ( मै. सं. ३.१.९ ) इत्याम्नातानि काम्यानि ॥ २१ ॥ उख्याग्नौ[1] समिध आदधाति[2] ॥ २२ ॥ द्रुन्नः इति क्रुमुकं घृताक्तम् ॥२३॥ प्रजाते परस्या अधि संवत: इत्यौदुम्बरीम् ॥ २४ ॥ परमस्याः परावतः इति वैकङ्कतीम् ॥ २५ ॥ यदग्ने यानि कानि च इति पञ्चभिः पञ्चौदुम्बरीरपरशुवृक्णाः ॥ २६ ॥ ये जनेषु मलिम्लवः इति वैकङ्कतीम् ॥ २७ ॥ दँष्ट्राभ्याम् इत्याश्वत्थीम् ॥२८॥ यो अस्मभ्यमरातीयाद् इति तैल्वकीँ यद्यभिचरति ॥ २९ ॥ उदेषां बाहून् ॥ सँशितं मे इत्यौदुम्बर्याँ यजमानँ वाचयति ॥ ३० ॥ ब्रह्म क्षत्रम् इत्यनादिष्टवृक्षाम् ॥ ३१ ॥ उख्ये भ्रियमाणे वृष्टिकामस्य याः सौरी रश्मिवतीस्तासां[3] तिसृभिस्तिस्र आश्वत्थीः समिध आदध्यात्। भ्राजस्वतीभिः सौरीभिरवृष्टिकामस्य ॥३२॥ यदि पशुपतिरभिमन्येत भिषग्वतीभिराग्नेयीभिः ॥ ३३ ॥ यदि नश्येद् अग्नेऽभ्यावर्तिन् ॥ अग्नेऽङ्गिरः ॥ पुनरूर्जा ॥ सह रय्या इत्युपतिष्ठते ॥ ३४ ॥ सौवर्णँ रुक्मं पाशवन्तमेकविँशतिनिर्बाधम् ॥ ३५ ॥

॥ इति चयने प्रथमेऽध्याये[4] द्वितीयं खण्डम् ॥

दृशानो रुक्मः इत्युपरिष्टान्निर्बाधं प्रतिमुञ्चते ॥ १ ॥ नक्तोषासा इति कृष्णाजिनम् ॥ २ ॥ सुपर्णोऽसि गरुत्मान् इत्यभ्युद्यछति ॥ ३ ॥ प्रादेशमात्रपादारत्निमात्रशीर्षण्या मौञ्जशिक्यौदुम्बर्यासन्दी फलकास्तीर्णा ॥ ४ ॥ तस्याँ[5] षडुद्यामं मौञ्जशिक्यमवधाय[6]

१. B आयामग्नौ; N आयान्नग्नौ; CR आयन्नग्नौ. cf. ManŚS VI. 1.1.28.

२. CR reads sutras 22–23 as a single sūtra.

३. B, N रश्मिवतीयासां.

४. B, N omit.

५. B, N तस्या.

६. B, N °मवदायाह.

मातेव पुत्रं पृथिवी पुरीष्यमग्निँ स्वे योनौ बिभर्तूखाम् ।
ताँ विश्वैर्देवैर्ऋतुभिः सँविदानः प्रजापतिर्विश्वकर्मा युनक्तु ॥

इत्यादधाति ॥ ५ ॥ विश्वा रूपाणि इति शिक्यपाशं प्रतिमुञ्चते ॥६॥ नक्तोषासा इति कृष्णाजिनम् ॥ ७ ॥ सुपर्णोऽसि गरुत्मान् इत्युख्य-मुद्यच्छन्नुपरिनाभि[१] विपरिवर्तयति[२] ॥८॥ विष्णोः क्रमोऽसि इति पर्यायै-र्यजमानश्चतुरः क्रमान् क्रामति ॥ ९ ॥ अक्रन्ददग्निः इति क्रमाणां पारे जपति ॥ १० ॥ दक्षिणावर्तते अग्नेऽभ्यावर्तिन्[३] इति ॥ ११ ॥ आ त्वाहार्षम् इत्यावृत्य जपति ॥ १२ ॥ उदुत्तमम् इति शिक्यपाश-मुन्मुञ्चते ॥ १३ ॥ अग्रे बृहन्नुषसाम् इत्युन्मुच्य जपति ॥ १४ ॥ हँसः शुचिषद् इत्यादधाति ॥ १५ ॥ सन्नवतीभिरुपतिष्ठते । दिवस्परि इति च वात्सप्रेण ॥ १६ ॥ रुक्मप्रतिमोचनादि वात्सप्रान्तँ[४] यजमानः करोति ॥१७॥ अनुगमयत्याहवनीयम् ॥१८॥ मुष्टिकरणाद्याऽवरिकेण दीक्षोपायो व्याख्यातः ॥ १९ ॥ व्यत्यासं क्रमवात्सप्रे[५] करोति । पूर्वेद्युः क्रामत्युत्तरेद्युर्वात्सप्रम् ॥ २० ॥ येन देवा ज्योतिषा इत्यहरह-र्घृताक्ताँ समिधमादधाति ॥ २१ ॥ अन्नपते इति व्रतकालेष्वन्नाक्ताम् ॥ २२ ॥ समिधाग्निम् इति चानक्ताम् ॥ २३ ॥ गायत्र्या ब्राह्मणस्या-दध्यात् प्र प्रायमग्निः इति त्रिष्टुभा राजन्यस्य द्वाभ्यां गायत्रीभ्याँ वैश्यस्य ॥ २४ ॥ प्रयास्यन्ननसि विहारमादधाति ॥ २५ ॥ उदु त्वा विश्वे देवाः इत्यग्निमुद्यच्छति ॥ २६ ॥ हँसः शुचिषद् इत्यादधाति ॥२७॥ सन्नवतीभिरुपतिष्ठते ॥२८॥ प्रेदग्ने इति प्रयापयति ॥२९॥ अक्रन्ददग्निः इति सर्जदभिमन्त्रयते[६] ॥ ३० ॥ यद्युखा भस्मना प्रति-

१. N °मुद्यछन्नु°, CR °मुद्गच्छन्नु°, cf. MānŚS VI. 1.4.10.

२. B, N विपरिवर्ति

३. B, N भ्यावर्तिन्

४. Thus N; CR वत्सप्रान्तँ. cf. sutras 16 and 20

५. Thus N; B क्रमवत्सप्रेण; CR क्रमणँ वात्सप्रेण cf. VārŚS II. 1.4.4.

६. MānŚS VI 1.4.30 यदि खर्जेत्; MS III 2.2. यद्ध्यक्ष उत्स्वेदेत्.

पूर्येतेष्टकासु कार्यम् ॥ ३१ ॥ पुरीषे पशुकामः कुर्वीत ॥ ३२ ॥ अप्सु यायावरः प्रवपेत् ॥ ३३ ॥ आपो देवीः इति प्रवपति[1] ॥ ३४ ॥ प्रसद्य भस्मना ॥ पुनरासद्य इति भस्ममुष्टी प्रत्यावपति ॥ ३५ ॥ पुनरूर्जा ॥ सह रय्या इति निवृत्य[2] बोधा मे अस्य इत्युपतिष्ठते ॥ ३६ ॥

॥ इति चयने प्रथमेऽध्याये[3] तृतीयं खण्डम् ॥

दीक्षितस्येष्टकाः कुर्वन्त्यदीक्षितस्य वा ॥ १ ॥ न त्वेवानालब्ध-प्राजापत्यस्य ॥ २ ॥ मृन्मयीस्त्र्यालिखिताश्चतुरस्रा दक्षिणावृतः सव्यावृत ऋजुलेखाश्च[4] ॥ ३ ॥ निर्मन्थ्येन लोहिनीः पचन्त्यन्वाहार्यपचनेन वा ॥ ४ ॥ समाप्तासु दीक्षासु क्रमवात्सप्रे समस्य[5] ॥ ५ ॥ अपेत वीत इति[5] देवयजनमध्यवस्यति ॥ ६ ॥ आहवनीयदेशे गार्हपत्यं चिनोति ॥ ७ ॥ मण्डलं चतुरस्रँ वा व्यायाममात्रँ विमायोद्धृत्याद्भिरवोक्ष्य यो नो अग्निः ॥ मयि गृह्णामि इति जपति ॥ ८ ॥ चितः स्थ परिचितः स्थ इत्येकविँशत्या शर्कराभिः परिश्रयति ॥ ९ ॥ अग्नेर्भस्मासि इति सिकता निवपति ॥ १० ॥ संज्ञानमसि इत्यूषान्न्युप्य व्यूहति ॥ ११ ॥ अयँ यो अग्निः इतिप्रभृतिभिश्चतस्रो[6] मध्ये प्राचीरुपदधाति ॥ १२ ॥ इडामग्ने ॥ अयं ते योनिर्ऋत्वियः इति द्वे समीची पुरस्तात् चिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीद इति ॥ १३ ॥ परिचिदसि इति द्वे समीची पश्चात्[7] ॥ १४ ॥ त्रयोदश च लोकंपृणाः ॥ १५ ॥ पृष्टो दिवि इति चात्वालदेशात् पुरीषमतिहृत्य[8] व्यूहति ॥ १६ ॥ एवँ

१. Thus emended; B, N, CR प्रथयति cf. ManŚS VI. 1.4.33.

२. B, N विवृत्यसन्न.

३. B, N omit.

४. CR reads sūtras 3–4 as a single sūtra.

५–५. B, N, CR ॥५॥ तस्या एतत्तिनत्ति cf. ManŚS VI 1.4.40–5.1

६. CR इति प्रभृति°

७. B, N यश्च

८. B, N पुरीषमसीतिहृत्य; CR पुरीषमाहृत्य. cf. II 2.5.21.

सर्वाश्चिनोति ॥ १७ ॥ पञ्चचितिकं प्रथमं त्रिचितिकं द्वितीयमेकचितिकं तृतीयम् । सर्वत्र वैकचितिकम्[१] ॥ १८ ॥ संचिते समितं संकल्पेथाम् इत्युख्यं निवपति ॥ १९ ॥ मातेव पुत्रम् इति शिक्यादुखां विमुञ्चते ॥ २० ॥ न[२] रिक्तामवेक्षते[२] ॥ २१ ॥ प्रत्यग्दक्षिणा नैर्ऋतीभिर्यन्ति ॥ २२ ॥ यदस्य पारे इति शिक्यमादत्ते ॥ २३ ॥ तिस्रस्तुषपक्वाः कृष्णा इष्टकाः[३] स्वकृत इरिणे असुन्वन्तम्[४] इति तिसृभिः परां परामुपदधाति ॥ २४ ॥ न तयादेवतं करोति ॥२५॥ यं ते देवी इति शिक्यमधिवपति[५] ॥ २६ ॥ रुक्मसूत्रमासन्दीमिति निधाय यदस्य पारे रजसः इत्यपः परिषिञ्चन् पर्येति ॥ २७ ॥ भूत्यै नमः इत्युक्त्वा निवृत्य[६]

शं नो देवीरभिष्टय आपो भवन्तु पीतये ।
शं योरभिस्रवन्तु नः ॥

इति परोगोष्ठं मार्जयन्ते[७] ॥२८॥ अनपेक्षमाणाः प्रत्यायन्ति ॥२९॥ निवेशनः इति गार्हपत्यमुपतिष्ठन्ते[८] ॥ ३० ॥ येन देवा ज्योतिषा इत्याहवनीयँ यजमानः समिन्द्धे ॥ ३१ ॥ प्रायणीयाप्रभृति समानमोपसद्भ्यः ॥३२॥ पूर्वाह्णिकीमुपसदं कृत्वा यूपं छित्त्वा वेदिं कृत्वाग्निँ विदधाति सप्तपुरुषं त्रीन् प्राचश्चतुरस्तिर्यक् ॥ ३३ ॥ पुरुषमात्राणि पक्षपुच्छानि भवन्ति ॥ ३४ ॥ आत्मा चतुःपुरुषो भवति[९] ॥ ३५ ॥

१. B, N चैक°
२. B न निरुक्तम°; N निरक्त°.
३. B, N इष्टकास्तिस्रः
४. B, N शुंवस्वम्.
५. B शिक्यं नाभिनयति; N शिक्टं नाभिनयति.
६. N निर्वृत्य.
७. B, N add इत्यभयतो..
८. N °तिष्ठते; MS III. 2.4; MānŚS VI. 1,5,24 have °तिष्ठते but VārŚS is influenced by ĀpŚS XVI. 16,5 cf. the next sūtra आहवनीयँ यजमानः समिन्द्धे.
९. B. N ग्निर्भवति.

अरत्निं पक्षयोरत्युपदधाति ॥ ३६ ॥ प्रादेशमात्रं पुछे[1] वितस्तिँ वा ॥ ३७ ॥ प्रजापतिष्ट्वा सादयतु तया देवतयाङ्गिरस्वद् ध्रुवा सीद इति विहितस्य मध्यँ[2] विमृश्य सजूरब्दः इति दर्भस्तम्बे हिरण्ये च मध्येऽग्निं जुहोति ॥ ३८ ॥ द्वादशयुक्तेन सीरेणाग्निं कृषति षड्युक्तेन वा ॥ ३९ ॥

॥ इति चयने प्रथमेऽध्याये[3] चतुर्थं खण्डम् ॥

सँ वरत्रा दधातन निराहावान् कृणोतन ।
सिञ्चामहा अवटमुद्रिणँ वयँ विश्वाहाजस्रमुक्षितम्[4] ॥
निष्कृताहावमवटँ सुवरत्रँ सुषेचनम् ।
उद्रिणँ सिञ्चे अक्षितम् ॥

इति युगवरत्राणि संबध्नाति ॥ १ ॥ पूषा युनक्तु इति युनक्ति ॥ २ ॥ लाङ्गलं पवीरवम् इति कृषति ॥ ३ ॥ पुछादधि शिरः[5] शिरस्तः पुछं पुछतः[5] शिरः । तिस्रः सीताः संपादयति ॥ ४ ॥ एतेन धर्मेण दक्षिणावर्तो दक्षिणस्मात् पक्षादुत्तरमुत्तरस्याः श्रोण्या दक्षिणमँसं दक्षिणस्या उत्तरम् ॥ ५ ॥ द्वादश सीताः संपाद्य प्राच उत्सृजन्ति[6] विमुच्यध्वमघ्न्या इति ॥ ६ ॥ विसृज्याध्वर्यवे वैकर्षणान् ददाति ॥ ७ ॥ कृष्टे[7] सर्वाम्नानि यवाँश्च मधूयुतान् वपति या ओषधयः इति चतुर्द-

१. B, N पुछं.
२. B, N मध्यम.
३. B, N omit
४. CR °मक्षितम्.
५–५. B, N शिरस्कत पुछं सुतः
६. B उत्सृजंते; N उत्सृज्यंते.
७. B सर्वे कृष्टे; N सर्वे कृष्णो.

शभिः ॥ ८ ॥ यस्य न[1] वपेत्तन्मनसा ध्यायेत्[2] । तस्योऽमेऽपिकुर्यात्[3] ॥ ९ ॥ ये वनस्पतीनामाप्तफलास्तेषामग्नीषोमीयायेऽमे संनहयेत् ॥ १० ॥ शिष्टान् मनसा ध्यायेत् ॥ ११ ॥ व्युत्कृष्टो लोष्टादिस्तेभ्यो यथाहृतान् मध्याय संभरति मा नो हिँसीत् इति चतसृभिः ॥ १२ ॥ यां जनतां क्षुध्यन्तीमिच्छेत्तां प्रति इषमूर्जम् इत्युक्त्वाददीत ॥ १३ ॥ यथा मन्येत तस्यां निहनिष्यतीत्येवमुपक्रमेत ॥ १४ ॥ कामं कामदुघे धुक्ष्व इति लोष्टान् कृष्टां चाभिमृशति ॥ १५ ॥ व्याघारणान्तामुत्तरवेदिं करोति ॥ १६ ॥ अग्निरुत्तरवेदिः ॥ १७ ॥ तेन धर्मेणापरिमिताभिः शर्कराभिरग्निं परिश्रयति ॥ १८ ॥

व्रजं कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमयसीरधृष्टा मा वः सुस्रोच्चमसो दृंहत तम् ॥
परि त्रिविष्टचध्वरँ यात्यग्नी रथीरिव ।
आ देवेषु प्रयो दधत् ॥

परि वाजपतिः इति परिश्रितमभिमन्त्र्य अग्ने तव श्रवो वयः इति सिकता निवपति ॥१९॥ संज्ञानमसि इत्यूषान्न्युप्य आप्यायस्व ॥ सं ते पयाँसि इति व्यूहति ॥ २० ॥ सीतामध्ये कुम्भेष्टका[4] उपदधाति । षट् कुम्भा द्वे द्वे कुम्भं च[5] कुम्भीं च चतस्रोऽपचतः[5] स्वयमातृण्णालोके द्वे द्वे[6] दिक्षु ॥ २१ ॥ समन्या यन्ति इति यजुषा षट्[7] । प्रथमयाद्भिः पूरयित्वोत्तराभिर्द्वादशोपधाय द्वाभ्यामुपतिष्ठेत ॥ २२ ॥ दिवि श्रयस्व इति नैवारं चरुं पयसि शृतमुपदधाति ॥ २३ ॥

॥ इति चयने प्रथमेऽध्याये[8] पञ्चमं खण्डम् ॥

१. B नि.
२. CR reads sūtra 9 as two sūtras.
३. B इमवकुर्याम्; N इमावकुर्यात्; CR °पि कुर्यात्
४. B, N रुमष्टका.
५–५. N कुशं च कुर्णा चतुरस्रोपचतः; B, CR कूपं च कुम्भी [ च ] चतस्रोऽपचतः.
६. added by conjecture cf. MānŚS VI. 1.6.18.
७. CR ends sūtra 21 here.
८. B. N. omit.

स्वदोहसा सह लोकंपृणाः[1] ॥ १ ॥ सर्वेष्टकासु तया देवतया करोति ॥ २ ॥ शीर्षपक्षपुच्छाप्यया[2] इति लोकाः[3] । मध्ये स्वयमातृण्णालोकः ॥ ३ ॥ वर्जयेत् कृष्णां भिन्नामलक्ष्मीमिति[4] ॥ ४ ॥ दक्षिणावृद्भिर्दक्षिणं पक्षमुपदधाति[5] सव्यावृद्भिरुत्तरमृजुलेखाभिर्दोषम्[6] ॥ ५ ॥ अग्रेणाहवनीयमानडुहे चर्मणि मृत्याश्चितीनामासाद्य संप्रेष्यति चित्यग्निभ्यः इत्युपांशु प्रणीयमानेभ्योऽनुब्रूहि इत्युच्चैः ॥६॥ प्राचीमनु प्रदिशम् इति प्रणयति ॥ ७ ॥ अश्वपूर्वा यन्ति ॥ ८ ॥ उत्तरं पुच्छाप्ययं प्रत्याक्रम्य एन्द्र सानसिँ रयिम् इत्याक्रमणमुपदधाति ॥ ९ ॥ पुरस्तात्प्राचीनास्तेन स्वयमातृण्णालोकम् अभ्यस्थाँ विश्वाः इत्याक्रमयति ॥ १० ॥ प्राञ्चं प्रक्रमय्य प्रत्यञ्चमभ्यावर्तयति ॥ ११ ॥ तपो योनिरसि इति पदे पुष्करपर्णमुपदधाति अपां पृष्ठमसि इति चाधस्तान्नाभि ॥१२॥ पुष्करपर्णे रुक्मं ब्रह्म जज्ञानम् इति पश्चात्पाशमधस्तान्निर्बाधँ[7] सादयति ॥ १३ ॥ कृणुष्व पाजः इति पञ्चभिरक्ष्णया व्याघारयति ॥ १४ ॥ हिरण्यगर्भः इति रुक्मे सौवर्णं पुरुषमुत्तानमुपदधाति ॥ १५ ॥ द्रप्सश्चस्कन्द इत्यभिमन्त्र्य नमो अस्तु सर्पेभ्यः इति तिसृभिरनुदिशति व्याघारयति च यथा रुक्मम् ॥ १६ ॥ अयमग्निः सहस्रिणः इति स्रुचं कार्ष्मर्यमयीं घृतस्य पूर्णां दक्षिणतः सादयति । भुवो यज्ञस्य इति दध्न औदुम्बरीमुत्तरतः ॥ १७ ॥ तेजोऽसि इति हिरण्येष्टकां शर्करां स्वयमातृण्णामश्वेनोपघ्राप्य भूर्भुवः स्वः इत्यभिमन्त्र्य ध्रुवासि धरुणा इति चाविदुषा[8] ब्राह्मणेन सह प्रजापतिष्ट्वा सादयतु इति पुरुषे सादयति

१. CR reads sūtras 1–2 as a single sūtra.
२. Thus emended; B, N, CR शःषान्यदसेस्थाप्यय.
३. B, N, CR लोको.
४. B °मलक्ष्मीति; N °मलक्षीति.
५. Thus N; CR पृच्छमु°
६. दोषम् ? cf. ĀpŚS XVI. 34. 2 : ऋजुलेखाः पश्चात्पुरस्ताच्च.
७. B, N पश्चाभ्यसमधस्तान्निर्वाध.
८. B, N अविदुषा सह.

॥१८॥ पुरुषस्यास्ये छिद्रं करोति ॥१९॥ "भूरसीति[1] प्राचीमुदूहेत्" ( मै. सं. ३.२.६ ) इति ब्राह्मणव्याख्यातम् ॥ २० ॥ चितिं जुहोमि इत्यातृण्णे जुहोति ॥ २१ ॥ पृथिवीमाक्रमिषम् इति यजमानँ वाचयति ॥ २२ ॥ यजमानोऽविदुषे वरं ददात्यविद्वानश्वर्यवे[2] ॥ २३ ॥ यास्ते अग्न आर्द्रा योनयः इति कुलायिनीम् ॥ २४ ॥ काण्डात्काण्डात् इति दूर्वेष्टकां लोष्टं दूर्वामिश्रँ सँसृष्टँ स्वयमातृण्णायाः ॥ २५ ॥ यास्ते अग्ने सूर्ये रुचः इति वामभृतँ हिरण्यशकलावभ्युहृय[3] ॥ २६ ॥ विराड् ज्योतिरधारयद्भूरसि भुवनस्य रेतः इति रेतःसिचम् ॥ २७ ॥ स्वराड् ज्योतिरधारयद्भूरसि भुवनस्य रेतः इति द्वितीयाम् ॥ २८ ॥ सम्राड् ज्योतिरधारयद् इति तृतीयाम् ॥ २९ ॥ प्रथमायां चितौ यून उपदध्यान्मध्यमायाँ विवयसो विहृताः[4] स्थविरस्य[5] ॥ ३० ॥ "पुत्री चिन्वीत" (मै. सं. ३.२.६) इति द्वयोर्ब्राह्मणम् ॥ ३१ ॥ बृहस्पतिष्ट्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीम् इति विश्वज्योतिषम् ॥ ३२ ॥ उदपुरा नामासि इति मण्डलामवदध्यात् ॥ ३३ ॥ ऋतव्या उपदधाति। मधुश्च माधवश्च इति पर्यायैर्द्वे द्वे चित्यां चित्यां चतस्रो मध्यमायां द्वे[6] द्वे पर्यायेण[6] ॥ ३४ ॥ अग्नेरन्तःश्लेषोऽसि इत्यनुषजेत् ॥ ३५ ॥ घर्मेष्टका उपधाय अषाढासि इत्यषाढाम् ॥ ३६ ॥ कूर्मं कच्छपं मत्स्यं दध्ना मधुना घृतेन मधु वाता ऋतायते इति तिसृभिः समज्य अपां त्वा गह्मन्त्सादयामि इत्यभिमन्त्र्य मही द्यौः इति पुरस्तात्प्रत्यञ्चँ सादयति ॥ ३७ ॥ औदुम्बरमुलूखलं प्रादेशमात्रं चतुःस्रक्ति ॥ ३८ ॥

॥ इति चयने प्रथमेऽध्याये[7] षष्ठं खण्डम् ॥

---

१. CR भूरिति.

२. B, N ददातिसविद्वान°.

३. B °शकलावहृत्य मूर्ध्नि; N °शकलावहृत्य मूर्ध्नि-च; cf. MānŚS VI. 1.7.15 : पूर्वां हिरण्यमूर्ध्नीं वामभृतम्; ĀpŚS XVI. 24. 2 : हिरण्यशकलावध्यूहृय.

४. CR विहृता.

५. cf. ĀpŚS XVI. 24.4.

६–६. CR begins the next sūtra with these words.

७. B, N omit.

यच्चिद्धि त्वं गृहे गृह उलूखलक युज्यसे ।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥

इति व्रीहीनवहत्य सहव्रीहयुपदधाति इदं विष्णुः इति दक्षिणतः पुरस्तात् स्वयमातृण्णायाः ॥ १ ॥ उखां सिकताभिः पूरयति दध्ना मधुना घृतेन वा ॥ २ ॥[1] अग्ने युक्ष्वा हि ये तव[2] ॥ युक्ष्वा हि देवहूतमान् इति संहिताभ्यामभिजुहोति ॥ ३ ॥ विषाद्य नक्तोषासा ॥ स्यूता[3] देवेभिः इत्यादत्ते ॥ ४ ॥ पृथिवि पृथिव्यां सीद इति सादयत्युत्तरतः पुरस्तात् स्वयमातृण्णाया यावत्युलूखलम् ॥ ५ ॥ समित्स्रवन्ति इति दध्ना मधुमिश्रेण शिरांसि पूरयित्वा छिद्रेषु हिरण्यशकलानप्यस्यति । ऋचे त्वा इति दक्षिणस्मिन् कर्णछिद्रे रुचे त्वा इति सव्ये भासे त्वा इति दक्षिणस्मिन्नक्षिछिद्रे ज्योतिषे त्वा इति सव्ये अभूदिदम् इति दक्षिणस्मिन्नासिकाछिद्रे अग्नेर्वैश्वानरस्य इति सव्ये अग्निस्तेजसा इत्यास्ये रुक्मो वर्चसा इत्यवकर्तने ॥६॥ सहस्रदा असि इति पुरुषशिरोऽभिमन्त्र्य आदित्यं गर्भम् इत्युखायामुत्तानमुपदधाति पश्चादवकर्तनतः ॥७॥ चित्रं देवानाम् इत्यर्धर्चाभ्यामक्षिछिद्रयोर्हुत्वा पश्चात् पुरुषशिरसः पुरुषचितिमुपदधाति पुरुषस्य प्रतिमाम् ॥ ८ ॥ मा छन्दः इति द्वादश पर्यायाः ॥ ९ ॥ तेषां तिस्रस्तिस्र एकैकेन ॥ १० ॥ तेन छन्दसा इत्यनुषजेत् ॥ ११ ॥ वातस्य जूतिम् इति पूर्वार्धेऽश्वशिर उत्तराभिस्तिसृभिर्यथासमाम्नातमितराणि । पश्चार्धे गोशिरो दक्षिणार्धेऽविशिर उत्तरार्धे बस्तशिरः ॥ १२ ॥ इमं मा हिंसीः इति पञ्चभिरुत्सर्गैरुपधानानुपूर्व्येणोपतिष्ठेत[4] ॥१३॥ यद्येकं स्यादनुपरिहारमुपदध्याल्लोकान् वोपतिष्ठेतोत्सर्गैश्च ॥१४॥ उत्तरमंसं स्वयमातृण्णामन्तरेण[5] न संचरेत्

---

१. CR reads sūtras 2 and 3 as a single sūtra.
२. B, N तवाग्ने.
३. Thus N; cf. MS II. 7.16; CR स्युता.
४. Thus emended; B, N, CR °पूर्वेणो°
५. Thus emended; B, N, CR °तृण्णायान्तरेण. cf. MānŚS VI. 1.7.32.

पशुशिराँसि[१] ॥ १५ ॥ त्वँ यविष्ठ इति सँवत्सरीं जपति[२] ॥ १६ ॥ सर्वशिर उत्तरस्मिन्नँस उपधाय नमो[३] अस्तु[३] सर्पेभ्यः इति तिसृभिरनुदिशति ॥ १७ ॥ अपां त्वेमन्त्सादयामि इति पञ्चदशापस्याः पञ्च पञ्चाभित उपदधाति ॥ १८ ॥ छन्दस्याः पञ्चोत्तरतः ॥ १९ ॥ अयं पुरो भूः इति पञ्चाशतं प्राणभृतः पञ्चभिः पर्यायैर्दश दशैकैकेन[४] ॥२०॥ प्रथमं दशवर्गं पुरस्तादुपदधात्यथ द्वितीयं[५] पश्चात् तृतीयं[५] दक्षिणतश्चतुर्थमुत्तरतो मध्ये पञ्चमम् ॥ २१ ॥ आयुषे प्राणः संतत: प्राणादपानँ[६] संतनु इति पञ्चाशतँ सँयतो दशभिः पर्यायैः पञ्च पञ्चैकैकेन[७] ॥२२॥ प्राची दिक् इत्यतिमात्रा यथा प्राणभृतः पञ्चाशतमुपधाय व्रतमुपदधाति ॥ २३ ॥

॥ इति चयने प्रथमेऽध्याये[८] सप्तमं खण्डम् ॥

सँयच्च[९] प्रचेताश्चाग्नेः सोमस्य सूर्यस्य ते तेऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

उग्रा च भीमा च पितृणां यमस्येन्द्रस्य ते तेऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

प्राची च प्रतीची च वसूनां रुद्राणामादित्यानां ते तेऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

---

१. Thus emended; B, N, CR संचरेदँसशिरांसि. cf. MānŚS VI. 1.7.32. CR reads sūtras 15 and 16 as a single sūtra.

२. B, N यज्ञपति.

३. Thus MS II. 7.15; B, N, CR नमोऽस्तु.

४. Thus emended; B, N, CR दशैकेन cf. sutras 10 and 22

५-५. B, N तृतीयं पश्चाद् द्वितीयं.

६. Thus N; CR प्राणापानँ.

७. Thus N; CR पञ्चैकेन.

८. B, N omit.

९. Thus TS IV. 4.11.2; KS XXII. 5; N सं.

यन्त्री च यमनी च मित्रावरुणयोर्मित्रस्य धातुस्ते तेऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

ध्रुवा च पृथिवी च सवितुर्मरुतां वरुणस्य ते तेऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

उर्वी चाधिपत्नी च बृहस्पतेर्विश्वेषां देवानां ते तेऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

**इति[1] ॥ १ ॥ वैश्वदेवी[2] प्रथमा व्रतस्य ॥ २ ॥ प्राच्या त्वा दिशा सादयामि इति पञ्चात्मेष्टका एकैकां लोकेषु ॥ ३ ॥ इन्द्रो दधीचो अस्थभिः इति दशाथर्वशिरो नव पूर्वार्धे एकां मध्ये ॥ ४ ॥ तिस्रो गायत्रीः पुरस्ताद् आयाहि सुषुमा हि ता इति ॥ ५ ॥ रथन्तरं द्वे द्वे तिस्रः कृत्वोपदधाति[3] ॥ ६ ॥**

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥
न त्वावं अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥

**इति रथन्तरम् ॥ ७ ॥ द्वे द्वे चित्यां[4] चित्यामुपदधाति ॥ ८ ॥**

त्वामग्ने वृषभं चेकितानं पुनर्युवानं जनयन्नुपागाम् ।
अस्थूरि नो गार्हपत्यानि सन्तु तिग्मेन नस्तेजसा सँशिशाधि ॥

**इत्यृषभमुपधाय लोकंपृणया चितिँ संछादयति ॥ ९ ॥ चित्यां चित्याँ हिरण्यशकलमध्यस्यति ॥ १० ॥ अश्वँ श्यावमालभते ॥ ११ ॥ पृष्टो दिवि इति चात्वालात्पुरीषमतिहृत्य व्यूहति ॥ १२ ॥ अग्निहोमचितिहोमाञ्जुहोति ॥ १३ ॥ अग्ने कक्ष्य[5] इति[5] पञ्चाग्निहोमाः**

---

१. CR reads sūtras 1 and 2 as a single sūtra.

२. Thus B, N; CR वैश्वदेवीः

३. CR reads sūtras 6 and 7 as a single sūtra.

४. CR omit.

५. Thus MS II. 13.12; CR कक्ष्येति; N कक्ष्येति.

॥ १४ ॥ या ता इषुः इति सर्वत्रानुषजेत् ॥१५॥ तेषामेकैकेन चित्यां चित्यां जुहोति ॥ १६ ॥ चितिहोमानेवम्[1] ॥१७॥ यो अप्स्वन्तरग्निः इति पञ्च चितिहोमाः ॥ १८ ॥

अग्ने देवं इहावह जज्ञानो वृक्तबर्हिषे।
असि होता न ईड्यः ॥
अगन्म महा नमसा यविष्ठम्[2] ॥
मेधाकारँ विदथस्य प्रसाधनमग्निँ होतारं परिभूतमं मतिम्।
त्वामर्भस्य[3] हविषः समानमित्त्वां महो वृणते नान्यं त्वत् ॥
मनुष्वत्त्वा निधीमहि मनुष्वत् समिधीमहि।
अग्ने मनुष्वदङ्गिरो देवान् देवायते[4] यज ॥
अग्निर्हि वाजिनँ विशे ददाति विश्वचर्षणिः।
अग्नी राये स्वाभुवँ स प्रीतो याति वीर्यमिषँ स्तोतृभ्य आभर ॥

इति पञ्च ॥ १९ ॥ तासामेकैकया चितिं चितिमभिमृशति अग्ने धामानि इति च ॥ २० ॥ व्रतप्रभृत्यभिमर्शनान्तँ सर्वचितिषु ॥ २१ ॥ अनूपसद्मग्निं चिन्वन्ति चिन्वन्ति ॥ २२ ॥

॥ इति चयने प्रथमेऽध्यायेऽष्टमं[5] खण्डम् ॥

॥ इति चयने[6] प्रथमोऽध्यायः ॥

---

१. B, N चितिहोमान एव; CR omit.
२. Thus N; the verse MS II. 13.5 is cited by *pratīka*. CR has reproduced the entire verse with the latter half shown in brackets.
३. CR त्वामर्थस्य.
४. CR देवयते.
५. B, N ऽष्टमं.
६. Thus B, N; CR omit.

ॐ

अश्वँ श्वेतमालभन् चितीरुपदधाति ॥ १ ॥ ध्रुवक्षितिः इति पश्चाश्विनीर्लोकेषूपधायर्तव्या[1] उपदधाति पञ्च पञ्चोत्तराः सजूर्देवैः इति पर्यायैः ॥ २ ॥ सजूर्ऋतुभिः इति पुरस्तात् पर्यायाणामनुषजेत् सजूर्देवैर्वयुनाधैः इत्युपरिष्टात् ॥३॥ प्राणं मे पाहि इत्यृतव्यासु वायव्या अनूपदधाति । अपः पिन्व इति वायव्यास्वपस्याः । क्षत्रं वयः इत्यपस्यासु[2] वयस्याः[2] पश्चात् । चतस्रः पुरस्तादुपधायोत्तरैः पर्यायैः पञ्च पञ्चाभित उपदधाति ॥ ४ ॥ व्याख्याताः सार्वचितिकाः ॥५॥ तृतीयामुपदधाति[3] ॥ ६ ॥ इन्द्राग्नी अव्यथमानाम् इति स्वयमातृण्णामभिमन्त्र्य विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ॥ अन्तरिक्षँ यच्छ इति सादयति ॥ ७ ॥ नात्राविद्वान्[4] वरदानम् ॥ ८ ॥ अन्तरिक्षमाक्रमिषम् इति यजमानँ वाचयति ॥ ९ ॥ ज्योतिरसि ज्योतिर्मे यच्छ इति हिरण्येष्टकाम्[5] ॥१०॥ राज्यसि प्राची दिक् इति पञ्च दिश्या लोकेषूपधाय रेतःसिचँ रेतःसिचौ वा ॥ ११ ॥ विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम् इति विश्वज्योतिषम् ॥ १२ ॥ अपराजिता नामासि इति मण्डलाँ सादयति[6] ॥ १३ ॥ आयुर्मे पाहि इति दश पुरस्तादुपधायोत्तरैः पर्यायैर्द्वादश द्वादशाभित उपदधाति ॥ १४ ॥ मूर्धासि राट् इति सप्त पुरस्तात् । यन्त्री राट् इति सप्त पश्चात् ॥ १५ ॥ समीचीरक्ष्णया द्वेष्यस्य ॥ १६ ॥ व्याख्याताः सार्वचितिकाः ॥ १७ ॥ चतुर्थीमुपद-

१. B, N °र्लोकेप्युपधायर्तव्ये. CR breaks the sūtra after लोकेषु.

२. Thus emended; B, N, CR इत्यपस्यासुत.

३. B, N तृतीयानुपवंती.

४. B, N नात्रविद्वान्.

५. CR reads sūtras 10–13 as a single sūtra.

६. B, N मंगलावृत्या

धाति ॥ १८ ॥ आशुस्त्रिवृत् इति पुरस्ताद् व्योमा सप्तदशः इति दक्षिणतः भान्तः[१] पञ्चदशः इत्युत्तरतः धरुण एकविँशः इति पश्चात् । प्रतूर्तिरष्टादशः इति षोडश शेषेणोपधायर्तव्ये उपदधाति[२] ॥ १९ ॥ [स्पृत उपदधाति । ] अग्नेर्भागोऽसि इति पुरस्ताद् इन्द्रस्य भागोऽसि इति दक्षिणतः नृचक्षसां भागोऽसि इति पश्चात् [मित्रस्य भागोऽसि इत्युत्तरतः।] अदित्या भागोऽसि इति षट् शेषेणोपधायर्तव्ये उपदधाति[२] ॥ २० ॥ एकयास्तुवत इति सप्तदश सृष्टीरुपधाय ऋतूनां पत्नी इति पञ्चदश व्युष्टीरुपदधाति ॥ २१ ॥ व्याख्याताः सार्वचितिकाः ॥ २२ ॥ पञ्चमीमुपदधाति ॥ २३ ॥ अग्ने जातान् इति पुरस्तात्[३] सहसा जातान् इति पश्चात् चतुश्चत्वारिँशी स्तोमः इति दक्षिणतः षोडशी स्तोमः[३] इत्युत्तरतः अग्नेः पुरीषम् इति मध्ये॥२४॥ चत्वारिँ शतम् एवश्छन्दः इति प्रथमं दशवर्गं पुरस्तादुपदधात्यथ[४] द्वितीयं पश्चात्तृतीयं[४] दक्षिणतश्चतुर्थमुत्तरतः ॥२५॥ रश्मिना क्षयाय क्षयं जिन्व इति त्रयस्त्रिँशतँ स्तोमभागाँश्चतुरः[५] सप्त वर्गान्[५] दक्षिणत उपधाय पञ्च लोकेषूपदधाति ॥ २६ ॥ राज्ञ्यसि प्राची दिक् इति पञ्च नाकसदो लोकेषु ॥ २७ ॥ अयं पुरो हरिकेशः इति पञ्चचूडाः पञ्च नाकसत्स्वभ्युपदधाति[६] । पश्चात्प्राचीमुत्तमाम्[७] ॥ २८ ॥ पुरोवातसनिरसि इति पञ्च वृष्टिसनयो लोकेषु[८] ॥ २९ ॥ सँयान्यावुपधाय[९] अम्बा च बुला च इति षोडश ॥ ३० ॥

---

१. B, N ध्वांतः

२–२. Thus N; CR उपधाय.

३–३. Thus N; CR पश्चाच्च [ तुश्च ] त्वारिँशी स्तोम.

४–४. B, N °दधातीत्य द्वितीयं तृतीयं पश्चाद् द्वितीयं.

५–५. B, N स्तोमभागाश्चतुरः सप्तवर्गा.

६. B, N °त्युप°

७. B, N पुरस्तात्प्राची°

८. CR reads sūtras 29 and 30 as a single sūtra.

९. B, N सँयाज्यामुप°.

येना ऋषयः इति त्रिभिरनुवाकैरेकत्रिँशतममृतम्[1] ॥ ३१ ॥ तपो योनिः इत्यष्टौ । ऋचा त्वा छन्दसा सादयामि इति च ॥ ३२ ॥ दूतं[2] वो[2] विश्ववेदसम् इति पञ्च ॥ ३३ ॥ छन्दश्चितिमुपदधाति[3] ॥ ३४ ॥ अयमग्निः सहस्रिणः इति तिस्रो गायत्रीः पुरस्तात् । तिस्रस्तिस्रोऽभित उपदधाति । त्रिष्टुब्भिर्दक्षिणतः । जगतीभिः पश्चात् । अनुष्टुब्भिरुत्तरतः ॥३५॥ पङ्क्तिभिः पुरस्तादुपदधाति । बृहतीभिर्दक्षिणतः । उष्णिग्भिः पश्चात् । ककुब्भिरुत्तरतः ॥ ३६ ॥

॥ इति चयने द्वितीयेऽध्याये[4] प्रथमं खण्डम् ॥

भद्रो नो अग्निराहुतो भद्रा रातिः सुभगो भद्रो अध्वरः ।
भद्रा उत प्रशस्तयः ॥
भद्रा उत प्रशस्तयो भद्रं मनः कृणुष्व वृत्रतूर्ये ।
येना समत्सु सासहि ॥
येना समत्सु सासहच्चव स्थिरा तनुहि भूरि शर्धताम् ।
वनेमा ते अभिष्टिभिः ॥

इति ॥ १ ॥ विराजः[5] प्रेद्धो अग्ने ॥ इमो अग्न इति ।

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् ।
दूरेदृशं गृहपतिमथर्युम् ॥

इति ॥ २ ॥ अग्ने तमद्य इति दक्षिणतः । अग्निं होतारं मन्ये इत्यतिछन्दसः पश्चात् ॥ ३ ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥ तं

१. अमृतम् ?
२. B हुतं; N हतीं.
३. CR breaks the sūtra not here, but after पुरस्तात् in the next sūtra.
४. B, N omit.
५. विराजः पुरस्तात् ?

त्वा शोचिष्ठ दीदिवः ।। अधा ह्यग्ने ।। एवा ह्यग्ने इति द्विपदा उत्तरतः ।। ४ ।। रेतःसिचमुपधाय परमेष्ठी त्वा सादयतु दिवः पृष्ठे ज्योतिष्मतीम् इति विश्वज्योतिषम् ।। ५ ।। भधिद्यौर्नामासि इति मण्डलाम् ।। ६ ।। ऋतव्ये उपधाय तमुपदधाति[1] ।। ७ ।। यवा अयवा इति सप्त ।।८।। पृथिव्यसि जन्मना इति पञ्चभिरनुवाकैरेकोना सप्ततिः ।। ९ ।। या देव्यसीष्टके इति पुरस्तात्पर्यायाणामनुषजेत् । उपशीवरी इत्युपरिष्टात् ।। १० ।। ऋचे त्वा ।। रुचे त्वा ।। द्युते त्वा ।। भासे त्वा ।। ज्योतिषे त्वा इति पञ्चभिर्घृतपिण्डान् ।। ११ ।।

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय ।
तस्यां देवाय सँविशत्युत्तमे नाक इह मादयताम् ।।

इति पौर्णमासीम् ।। १२ ।। कृत्तिका नक्षत्रम् इति नक्षत्रेष्टकाः पुरस्तात्प्रतीचीरूनात्रिँशतम् । अग्ने रुचः स्थ इत्यनुषजेत् ।। १३ ।। पुरस्ताद्विशाखस्य[2] अमावास्या सुभगा इत्यमावास्याम् । उपरिष्टाद्भरणीनां पौर्णमासीममावास्यां च ।। १४ ।। ऋषभमुपधाय लोकंपृणया चितिँ[3] संछादयति ।। १५ ।। स्वरसि स्वर्मे यच्छ इति हिरण्येष्टकाम् ।। १६ ।। परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यचस्वतीम् इति स्वयमातृण्णामध्वर्युः प्रोथदश्वः इति विकर्णीँ शर्करां प्रतिप्रस्थाता । युगपदुपवपतः[4] ।।१७।। दिवमाक्रमिषम् इति यजमानँ वाचयति ।। १८ ।। न स्वयमातृण्णामुपवपति ।। १९ ।। पुरीषप्रभृति समानम् ।। २० ।। जानुदघ्नं प्रथमं चिन्वानश्चिन्वीत नाभिदघ्नं द्वितीयं चुबुकदघ्नं तृतीयम् । ततो न ज्यायाँसम् ।। २१ ।। साहस्रं प्रथमं द्विसाहस्रं द्वितीयं त्रिसाहस्रं तृतीयम् ।।२२।। संचितँ सहस्रेण हिरण्यशकलैः प्रोक्षति पञ्चधा विभज्य सहस्रस्य

---

१. तम् ?
२. B, N °स्ताद्वि°
३. B, N चिती.
४. B, N °दुपावंतो.

मासि इति पर्यायैः ॥२३॥ साहस्रोऽसि सहस्राय त्वा इत्यनुषजेत् ॥२४॥

॥ इति चयने द्वितीयेऽध्याये[1] द्वितीयं खण्डम् ॥

वसवस्त्वा रुद्रैः पश्चात्पान्तु इति घृतेन प्रोक्षति पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्[2] ॥ १ ॥ उत्तरैः पर्यायैरनुक्रामन् ॥ २ ॥

नितानस्त्वा[3] मारुतो मरुद्भिरुत्तरतः पातु ॥
आदित्यास्त्वा पुरस्ताद्विश्वैर्देवैः पान्तु ॥
पितरस्त्वा यमराजानः पितृभिर्दक्षिणतः पान्तु ॥
देवेन्द्रस्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्तु ॥

इति मध्ये ॥ ३ ॥ इमा मे अग्ना इष्टका धेनवः सन्तु इत्यभिमन्त्र्य शतरुद्रियं जुहोत्यर्कपर्णेन[4] ॥ ४ ॥ अजक्षीरेण गवीधुकासक्तून् कृत्वा षड्ढा विभज्योत्तरापरस्यामिष्टकायामुदङ्[5] तिष्ठन्नात्युद्रहन्नग्निं[6] नमस्ते रुद्र मन्यवे इतिप्रभृतिना नमः सेनाभ्यः सेनानीभ्यश्च वो नमः इत्यन्तेन जानुदघ्ने ॥ ५ ॥ नमो रथिभ्यः इतिप्रभृतिना नमो मेध्याय च विद्युत्याय च इत्यन्तेन नाभिदघ्ने ॥ ६ ॥ नमो वर्ष्याय चावर्ष्याय च इतिप्रभृतिनाऽऽ प्रत्यवरोहेभ्यस्तृतीयमास्यदघ्ने ॥ ७ ॥ नमो अस्तु रुद्रेभ्यो ये दिवि इति त्रीन् प्रत्यवरोहान् ॥ ८ ॥ आस्यदघ्नादीन् यजमानं वाचयन् तेषु देशेषु जुहोति ॥ ९ ॥ असंचरेऽर्कपर्णं न्यस्यति । “ यं द्विष्यात्तस्य पशूनाँ संचरे न्यस्येत् ” ( मै. सं. ३.३.४ ) इति ब्राह्मणव्याख्यातम् ॥ १० ॥ गावीधुकं चरुं पयसि शृतमुपदधाति तस्यामेवेष्टकायाँ

---

१. B, N omit.

२. CR reads sūtras 1 and 2 as a single sūtra.

३. B, N युंजानस्त्वा.

४. CR reads sūtras 4 and 5 as a single sūtra.

५. B, N °मिष्टकायामिष्टकास्.

६. Thus emended; B, N, CR °नात्यद्रोहन्नग्नि

यो रुद्रोऽप्सु योऽग्नौ य ओषधीषु ।
यो रुद्रो भुवनाविवेश तस्मै रुद्राय नमोऽस्तु देवाय ॥

इति ॥११॥ तिसृधन्वमयाचितो[1] ब्राह्मणाय ददाति ॥१२॥ अश्मन्नूर्जम् इत्युदकुम्भेनाग्निं त्रिः परिषिच्य त्रिः प्रतिपर्येति ॥ १३ ॥ "यद्यभिचरेदेतदेव यजुः" ( मै. सं. ३.३.५ ) इति ब्राह्मणव्याख्यातम् ॥ १४ ॥ आग्नेयपावमान्यां गायत्रं[2] गायति शिरसि । रथन्तरं दक्षिणस्मिन् पक्षे । बृहदुत्तरस्मिन् । वामदेव्यं दक्षिणस्यां श्रोण्याम् । पुच्छे यज्ञायज्ञियम् । प्रजापतेर्हृदयमनृचमपिपक्षे ॥ १५ ॥ अर्क्यैः सामभिरर्कं परिष्टुवन्ति ॥ १६ ॥ स्तुतं होतानुशँसति ॥ १७ ॥ इष्टो यज्ञो भृगुभिः इत्याग्निकँ समिष्टयजुर्यजमानँ वाचयति ॥१८॥ अवकां वेतसशाखां मण्डूकमिति वँशे प्रबध्य समुद्रस्य त्वावकया इति सप्तभिरग्निं परिकर्षति ॥१९॥ प्राणो मण्डूके[3] ॥२०॥ विकर्षणँ संलुप्योत्करे न्यस्यति ॥ २१ ॥ कृष्णाजिनस्योपानहौ प्रतिमुच्य नमस्ते हरसे इत्यारोहति ॥ २२ ॥ पञ्चगृहीत आज्ये पञ्च हिरण्यशकलान् प्रास्य स्वयमातृण्णां पञ्चकृत्वोऽक्ष्णया व्याघारयति नृषदे वट् इति पर्यायैः ॥ २३ ॥ द्वाभ्यामुत्तमं मध्ये ॥ २४ ॥ दध्ना मधुमिश्रेणाग्निँ व्यवोक्षति अन्नपते इति दर्भगुरुमुष्टिना ॥ २५ ॥ प्राणदा इत्यवरोहति ॥ २६ ॥ व्यवोक्षणान्तं कृत्वोत्तमेन प्रवर्ग्यानुवाक्येन गणेन पश्चार्धे चतुर्थम् ईदृङ् च इति पञ्चमम्[4] ईदृक्षासः इति षष्ठम्[5] इन्द्रं दैवीर्विशः इति

१. B, N श्रीनिषवंतश्रान्यचितो

२, B, N गायन्या.

३. ? cf. ĀpŚS XVII. 12.8; विकर्षणेनानुगमयित्वा मण्डूकस्य प्राणान् सर्वान् संलोभ्योत्कर उदस्यति ।

४. Thus N; CR पञ्चमीम्.

५. Thus N; CR षष्ठीम्.

सप्तमम्[1] ॥ २७ ॥ "यदि कामयेत विशा क्षत्रँ हन्याम्" (मै. सं. ३.३.१०) इति ब्राह्मणव्याख्यातम् ॥ २८ ॥

॥ इति चयने द्वितीयेऽध्याये[2] तृतीयं खण्डम् ॥

वसोर्धारां जुहोति ॥ १ ॥ समुद्रादूर्मिः इति सूक्तेन घृतमभिमन्त्र्यौदुम्बर्या महत्या स्रुचा पश्चाच्चमसया[3] स्रुक्पात्रेण संछादितया[4] मृदा[5] जुहोति। आज्यं[5] चमस आसिञ्चति ॥ २ ॥ वैश्वानरीये धारां पातयति अग्नाविष्णू सजोषसा इति जपित्वाविच्छिन्नाम् ॥३॥ वाजश्च मे इति पञ्चानुवाकान् यजमानँ वाचयति ॥ ४ ॥ एका च तिस्रश्चा त्रयस्त्रिँशतश्चतस्रश्चाष्टौ च इति चतुरभ्यासेनाष्टाचत्वारिँशतः[6] ॥ ५ ॥ धेनुश्चानड्वांश्च इत्युक्त्वा आयुर्यज्ञेन कल्पते इतिप्रभृतिना स्वर्मूर्धा स्वाहा ॥ वैयशनः स्वाहा ॥ व्यश्यन्नान्त्यः स्वाहा ॥ अन्त्यो भौवनः स्वाहा ॥ भुवनस्य पतयेऽधिपतये स्वाहा इति ॥ ६ ॥ स्वर्देवा अगामामृता अभूम प्रजापतेः प्रजा अभूम स्वाहा इत्यन्तेन धारा ॥ ७ ॥ अग्नौ स्रुचमनुप्रहरति ॥८॥ यदाज्यमुच्छिष्यते तस्मिँश्चतुःशरावमोदनं पक्त्वा मध्यतःकारिभ्यो ददाति चतस्रश्च धेनूः ॥ ९ ॥ वाजप्रसव्यं जुहोति वाजाय स्वाहा इति त्रयोदशाहुतीः ॥ १० ॥ सर्वाणि ग्राम्याण्यारण्यानीत्याज्येन[7] प्रयुत्यौदुम्बरेण स्रुवेण जुहोति अग्ने अछा वदेह नः इत्यष्टौ विश्वे नो अद्य इति षट् ॥ ११ ॥ हुत्वा हुत्वा पात्र्यां संपातानवनयत्य-

१. Thus N; CR सप्तमीम्.
२. B, N omit.
३. Thus emended; B, N, CR पश्चाच्चमसः
४. Thus emended; B, N संछादितस्या; CR संछादितस्य.
५-५. Thus emended; B, N, CR मृदाहितायामाद्य
६. CR reads sutras 5–7 as a single sūtra.
७. Thus emended; N सर्वानानिम्यान्यारण्यानित्याज्येन; CR सर्वाणि ग्राम्याण्यारण्यान्याज्येन.

भिषेकाय ॥ १२ ॥ अग्रेण[1] सदोऽभिषिञ्चत्यासन्द्यां[1] कृष्णाजिने ब्रह्मवर्चसकामं बस्ताजिने पशुकामम् ॥ १३ ॥ देवस्य त्वा इति बृहस्पतिम् इति ब्राह्मणम् इन्द्रम् इति राजन्यं भवम् इति वैश्यम् ॥ १४ ॥ द्वादशगृहीतेन राष्ट्रभृतो जुहोति ऋताषाट् इति षड्भिः पर्यायैर्द्वे पर्यायेण । स न इदं ब्रह्म क्षत्रं पातु इत्यनुषजेत् ॥ १५ ॥ अमृडयः इति राजन्यस्योत्तमां कुर्यात् प्रजापतिः परमेष्ठी इति वैश्यस्य ॥ १६ ॥ स नो भुवनस्य पते इति रथमुखे-दश ॥ १७ ॥ प्रक्षालितशिरसँ रथमध्यग्निं धारयन्ति ॥ १८ ॥ प्रत्यङ्मुखे प्रथमं द्वे द्वे दिक्ष्वनुपरिहारं पश्चात्प्राङ्मुखे द्वितीयम् ॥ १९ ॥ अन्ततो[2] हुत्वाऽवयोरावसथँ हरन्ति ॥ २० ॥ तं दक्षिणायाः काले यजमानोऽनुदिशति ॥ २१ ॥ त्रीन् वातहोमानञ्जलिना परिग्राहं[3] जुहोति समुद्रोऽसि नभस्वान् इति पर्यायैः ॥ २२ ॥ पृष्ठ्याबर्हिःप्रभृति समानमा धिष्ण्यनिवपनात् ॥ २३ ॥ धिष्ण्येष्विष्टका[4] उपदधाति[5] वैहवीरावर्तयन् ॥ २४ ॥ अश्मनवमा आग्नीध्र एकविँशतिँ होत्रिय एकादश ब्राह्मणाछँस्ये षण्मार्जालीयेऽष्टाष्टावितरेषु ॥ २५ ॥ अग्नीषोमीयस्य पशुपुरोडाशम् "अग्नये गृहपतये" (मै. सं. २.६.१३) इत्यष्टौ देवस्वाँ हवीँष्यनुनिर्वपति सर्वपृष्ठां च[6] "अग्नये गायत्राय" (मै. सं. ३.१५.१०) इति दशहविषम् ॥ २६ ॥

॥ इति चयने द्वितीयेऽध्याये[7] चतुर्थं खण्डम् ॥

---

१–१. Thus emended; B, N अग्रेणदोंभि°; CR अग्रेणाभि°
२. Thus N; CR ततो.
३. B, N परिग्राहन्वातं
४. Thus emended; B, N, CR धिष्ण्यानिवपत्युपेष्विष्टका.
५. Thus B, N; CR दधाति.
६. B, N, CR सर्वपृष्ठयां cf. III 2.5.20; 3.1.62; 4.1.59.
७. B, N omit.

श्वो भूते परिधीन् परिधाय अग्निँ युनज्मि इति दक्षिणं पक्षमभिमृशति । इमौ ते पक्षौ इत्युत्तरम् । इन्दुर्दक्षः इत्यात्मानम् ॥ १ ॥ एकयूप[1] ऐकादशिनानुपाकरोति[1] यद्येकाहो भवति ॥ २ ॥ हिरण्यस्थालँ शतमानस्य मधुनः पूर्णं दक्षिणाभिः[2] सहातिहरन्ति[2] मन्त्रवर्जम्[3] ॥ ३ ॥ तत् चित्रं देवानाम् इति यजमानोऽवेक्ष्याश्वेनावघ्राप्य ब्राह्मणाय ददाति ॥ ४ ॥ पुरस्ताद्यज्ञायज्ञियस्य दिवो मूर्धासि इत्यप्सुमतीभ्यामग्निँ[4] संमृशति[4] ॥ ५ ॥

इमँ स्तनं मधुमन्तं धयापां प्रपीनमग्ने सलिलस्य मध्ये ।
उत्सं जुषस्व मधुमन्तमूर्मिँ समुद्रियँ सदनमाविवेश स्वाहा ॥

इति परिधिविमोकमभिजुहोति । वि ते मुञ्चामि इति च ॥ ६ ॥ समारोपयन् यास्ते अग्ने ॥ या वो देवाः । रुचं नो धेहि ॥ तत्त्वा यामि इत्याहुतीर्जुहोति[5] ॥ ७ ॥ समीची नामासि इति दधि[6] मधु च[6] ॥ ८ ॥ स्वयं कृण्वानः इति पञ्चभिराज्यम् ॥ ९ ॥ हिरण्यगर्भः इत्यष्टौ हुत्वा प्रत्यवरोहति

पुनर्मनः पुनरायुर्न आगात् पुनः प्राणः पुनराकूतमागात् ।
पुनश्चक्षुः पुनः श्रोत्रं म आगात् ॥
वैश्वानरोऽदब्धस्तनूपा अववाधतां दुरितानि विश्वा ।
उरुशँस मा ना आयुः प्र मोषीः ॥

इति ॥ १० ॥ दीक्षया त्वापं तपसा त्वापँ सत्यया त्वापँ वशया त्वापमवभृथेन त्वापम् इति यजमानोऽग्निमुपतिष्ठते ॥ ११ ॥ अग्निं चित्वा न रामामुपेयाद् द्वितीयं चित्वा नान्यस्य भार्यां तृतीयं चित्वा न कांचन ॥ १२ ॥ यद्युपेयान्मैत्रावरुण्यामिक्षया यजेत ॥ १३ ॥ अग्निं चित्वा

---

१. B, N एके यूपे एका°.
२. B, N दक्षिणातिसद्यतिहरंति.
३. Thus N; CR मन्त्रवर्गम्.
४. B, N °भग्नीछंमृशति.
५. CR reads sūtras 7–10 as a single sūtra.
६-६. Thus emended; B, N द्वीमधुध; CR द्वे मधुश्च.

मैत्रावरुण्यामिक्षया यजेत सौत्रामण्या वा ॥ १४ ॥ अग्निचित्पक्षिणः[1] शिरसो नाश्नीयान्न[1] पापं कीर्तयेन्न कंचन प्रत्यवरोहेत् ॥१५॥ संवत्सरं न वर्षति धावेद्यावज्जीवँ वा ॥ १६ ॥

येऽग्नयः पुरीषिण आविष्टाः पृथिवीमनु ।
तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव ॥

इति प्रोक्ष्य स्वाग्निमुपतिष्ठते । उप त्वाग्ने दिवे दिवे इति तृचेनान्येषाम् ॥ १७ ॥ यदि चित्वा प्रयायाद्यमनन्तरँ सोममाहरेत्तस्मिन्[2] पुनश्चितिमुपदधाति ॥ १८ ॥ अष्टौ नानामन्त्राः ॥ १९ ॥ सँस्थितयोः पूर्वाह्णिक्योः प्रवर्ग्योपसदोः येना ऋषयः इत्यष्टावुपदधात्यष्टौ च लोकंपृणाः ॥ २० ॥ पृष्टो दिवि इति चात्वालात् पुरीषमतिहृत्य व्यूहति ॥ २१ ॥ समानमन्यत् ॥ २२ ॥ प्रथमं चिन्वानो मध्यमायां चितावुपदधाति स्तोमा नानामन्त्राः प्राग्लोकंपृणायाः ॥ २३ ॥ द्वितीयं चिन्वान उत्तमायां प्राग्लोकंपृणायाः ॥ २४ ॥ यद्यग्निचिदनग्निचित्यँ सोममाहरेदेकविँशतिमुपदधीताष्टौ नानामन्त्रास्त्रयोदश च लोकंपृणाः ॥ २५ ॥ अयं ते योनिर्ऋत्वियः इत्यग्निँ संमृशति ॥ २६ ॥ यदि तापश्चितमाहरेत् संवत्सरं दीक्षितो भवति सँवत्सरमुपसद्भिश्चरति ॥२७॥ पुरस्तादुपसदामाग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशकपालम् ॥ २८ ॥ दाशतयैस्त्वाग्नेयैः सूक्तैः प्रतिसूक्तमिष्टका उपदधाति ॥ २९ ॥ अभिजिद्विश्वजिद्वा सँस्था ब्राह्मणव्याख्याता[3] ब्राह्मणव्याख्याता ॥ ३० ॥

॥ इति चयने द्वितीयेऽध्याये[4] पञ्चमं खण्डम् ॥

॥ इति चयने द्वितीयोऽध्यायः ॥

---

१–१. B, N, CR अग्निचिद्वसोत्मीभया...तं cf. MānŚS VI. 2.6.25; ĀpŚS XVII. 24.2–3.

२. B सोमसाभरस्विन्; N सोममाहाभरस्विन्.

३. The brāhmaṇa could not be traced in MS.

४. B, N omit.

## वाजपेयः

ब्राह्मणो राजन्यो वा शरदि वाजपेयेन यजेत ॥ १ ॥ षोडशिकी राजक्रयणी ॥ २ ॥ सप्तदश दीक्षास्तिस्र उपसदः ॥ ३ ॥ कृते खरे[१] दक्षिणस्य हविर्धानस्य पश्चादक्षमुपयामेभ्यः खरं करोति ॥ ४ ॥ हविर्धानगते सोमे सुरां द्रोणँ वालमित्यपरेण द्वारेण प्रपादयति ॥५॥ प्रतिप्रस्थातुः सुरायाः[२] कर्म ॥६॥ खादिरश्चतुरस्रो यूपः सप्तदशारत्निः ॥ ७ ॥ गोधूमपिष्टानां चषालँ समँ यूपाग्रेण ॥ ८ ॥ रशनास्थाने सप्तदशभिर्वासोभिर्वेष्टयति ॥ ९ ॥ श्वो भूते वाजपेयसँस्था ॥ १० ॥ देव सवितः इति सवनमुखेषु जुहोति ॥ ११ ॥ हिरण्यस्रज ऋत्विजः सोमैः प्रचरन्ति ॥ १२ ॥ आग्रयणस्थालीं प्रयुज्य पञ्च खादिराणि वायव्यानि पात्राणि प्रयुनक्ति ॥ १३ ॥ षोडशिपात्रं प्रयुज्य सप्तदश खादिराणि वायव्यानि सप्तदश मार्त्तिकानुपयामान् ॥ १४ ॥ अतिपाव्यमाने[३] द्रोणे[३] वालँ वितत्य सुरामतिपावयति पुनातु ते परिस्रुतम् इति ॥ १५ ॥ आग्रायणं गृहीत्वा पञ्चैन्द्रानतिग्राह्यान् गृह्णाति उपयामगृहीतोऽसि नृषदं त्वा इति पर्यायैः[४] ॥ १६ ॥ कुविदङ्ग इति सप्तदश प्राजापत्यान् ॥ १७ ॥ अया विष्ठा इति सप्तदश सुराग्रहान्[५] ॥ १८ ॥ [६]पूर्वोऽध्वर्युर्गृह्णाति ॥ १९ ॥ पुरोऽक्षमध्वर्युः सोमग्रहान् सादयति । पश्चादक्षं[६] प्रतिप्रस्थाता सुरोपयामान् ॥ २० ॥ व्यत्यासं गृह्णीतः ॥ २१ ॥ पशूनुपाकरोत्याग्नेयमजमैन्द्राग्नमजमैन्द्रँ वृष्णिँ सारस्वतीं मेषीं

१. Thus emended; B, N, CR वरे.

२. B, N सुरायां.

३. B, N °मानैर्द्रोणे.

४. CR reads sutras 16–18 as a single sūtra.

५. B, N सुराः

६–६. B, N पर्याध्वर्युः सानुगृहीतो सुरोपयामेऽध्वर्युः सोमग्रहँ सादयत्यपर.

सारस्वतं मेषं मारुतीं पृश्निँ वशाँ सप्तदश प्राजापत्यान् श्यामाँस्तूपरानजानेकरूपान् सारस्वतीं मेषीमपन्नदतीम् ॥ २२ ॥ पर्यग्निकृतानामाग्नेयप्रभृतीनां चतुर्णाँ वपाभिः प्रचरन्ति । इतरान् परिशाययन्ति ॥२३॥ माध्यंदिनीयान् सवनीयाननु नैवारं चरुं निर्वपति बार्हस्पत्यँ सप्तदशशरावमौदुम्बर्या स्रुचा त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ २४ ॥ पयसि शृतं पात्र्यामुद्धृत्य चात्वालेऽवदधाति ॥ २५ ॥ दक्षिणाकाले दक्षिणतः पुरस्तात् प्राग्वँशस्य वाजस्य नु प्रसवे इति रथमुपावहरति ॥ २६ ॥ अप्स्वन्तरमृतम् इत्यश्वान् स्नपयन्ति ॥ २७ ॥ वायुर्वा त्वा इति युनक्ति ॥ २८ ॥ अपां नपादाशुहेमन् इति रराटानि प्रतिमार्ष्टि ॥ २९ ॥ प्रष्टिवाहिनँ रथँ युञ्जन्ति । तूष्णीँ षोडशेतरान् ॥ ३० ॥ सप्तदश ददाति । सप्तदश हस्तिनः सप्तदश दासीर्निष्ककण्ठीः सप्तदश गवाँ शतानि[1] दश सप्तदशानि प्रकृतीनाँ युक्तं दक्षिणानाम्[2] ॥ ३१ ॥ रथाँस्तीर्थान्तेऽवस्थापयन्ति[3] ॥ ३२ ॥ महेन्द्रकाले[4] वेदिस्रक्तिषु दुन्दुभीनवघ्नन्ति ॥ ३३ ॥ रथाक्षं चात्वाले निघ्नन्ति ॥ ३४ ॥ तस्मिन् रथचक्रं मुञ्चत्यौदुम्बरँ सप्तदशारम् ॥ ३५ ॥ सप्तदशोषपुटानश्वत्थपर्णेषूपनद्धाँश्चतुरश्चतुरः पञ्चैकस्मिन् ॥ ३६ ॥ उत्तरतः पुरस्तात् सप्तदशस्विषुक्षेपेष्वौदुम्बरीं काष्ठां निघ्नन्ति ॥ ३७ ॥ प्रस्तुते[5] माहेन्द्रस्य[6] स्तोत्रे देवस्य सवितुः इति ब्रह्मा रथचक्रँ सर्पति ॥ ३८ ॥ आरुहय वाजसाम गायति ॥ ३९ ॥ चक्रमावेष्टयति ॥ ४० ॥ विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि विष्णोर्विक्रमणमसि इति पर्यायैर्यजमानस्त्रीन् क्रमान् क्रमते रथाय व्रजन् ॥ ४१ ॥ देवस्य वयम् इति यजुर्युक्त-

१. B, N द्वादशानि.
२. ?
३. B, N रथाँस्तीर्त्वान्ते.
४. B, N महेंद्र°.
५. B, N प्रश्नते.
६. B, N महेंद्रस्य.

मारोहति ॥ ४२ ॥ अग्निरेकाक्षराम् इत्युज्जितीर्यजमानँ वाचयति ॥ ४३ ॥ वाजिनौ वाजजितौ इति युग्यौ[1] नैवारमवघ्रापयति ॥ ४४ ॥ उत्तरेण पर्यायेण प्रग्रोथेषु लेपान्निमार्ष्टि[2] ॥ ४५ ॥ अवरोहति यजमानः ॥ ४६ ॥ राजभव्यः पुत्रः प्रतिहित आजिं धावति ॥ ४७ ॥

॥ इति वाजपेये प्रथमेऽध्याये[3] प्रथमं खण्डम् ॥

अङ्कौ न्यङ्कावभितो रथँ ये ध्वान्ता वाता अग्रमभि ये संपतन्ति ।
दूरेहेतिः पतत्री वाजिनीवाँस्ते नो अग्नयः पप्रयः पारयन्तु ॥

इति चक्रमभिमन्त्रयते ॥ १ ॥

अश्वाजिनि वाजिनि वाजेषु वाजिनीवत्यश्वान् समत्सु चोदय ॥

इति कशामादाय अर्वासि सप्तिरसि इत्यश्वान् संक्षिपति ॥ २ ॥ विश इतरान्[4] प्रेष्टानारोहन्ति ॥ ३ ॥ तैः सहाजिं धावति ॥ ४ ॥ वाजँ वाजिनो जयत इति यजुषा ॥ ५ ॥ चतसृभिर्धावति ॥ ६ ॥ रथा[5] आवर्तन्ते[5] । प्रदक्षिणं काष्ठां कृत्वायन्ति ॥ ७ ॥ आ मा वाजस्य इत्येतयागतेषु जुहोति ॥ ८ ॥ प्रतिरथं कृष्णलान्याहरन्ति ॥ ९ ॥ हिरण्यस्थालँ शतमानस्य मधुनः पूर्णं ब्रह्मणे ॥ १० ॥ इन्द्राय वाचँ वदत इति दुन्दुभीनाघ्नन्ति ॥ ११ ॥ इयँ वः सा सत्या इति इन्द्राय वाचँ विमुच्यध्वम् इति रथविमोचनीयं जुहोति ॥ १२ ॥ तेन धर्मेण युग्यौ नैवारमवघ्रापयति ॥ १३ ॥ दर्भमयँ वासः पत्नी परिधत्ते तार्प्य[6] यजमानः क्षौमँ यूपे सर्पिषि वा पर्यस्तम् ॥ १४ ॥ स्वो रोहाव इति यजमानः पत्नीमामन्त्रयते एहि इति । पत्नी तैरेतेन धर्मेण ॥ १५ ॥

१. B, N युग्यै.
२. B, N लेपन्नं निमार्ष्टि.
३. B, N omit.
४. Thus emended; N इतरा; CR इतराः
५. B, N स्वामार्त्तते.
६. B, N ताप्यमयँ.

अहं नावुभयो रोक्ष्यामि इत्युक्त्वा आयुर्यज्ञेन कल्पतें इति यजमानो यूपमारोहति ॥ १६ ॥ अन्नाय त्वा वाजाय त्वा इति विश ऊषपुटैर्यजमानमर्पयन्ति पुरस्तात्प्रत्यञ्चम् ॥ १७ ॥ यो योऽर्पयति[1] तं तमभिपर्यावर्तेत[2] ॥ १८ ॥ स्वर्देवा[2] अगाम इति[3] यूपमारुह्य जपति[3] ॥१९॥ अग्ने अच्छा वदेह नः इति सप्तभिरन्नहोमान्जुहोति ॥ २० ॥ अग्नये एकाक्षराय छन्दसे स्वाहा इत्यनुवाकशेषेण[4] यजमानमवरोहयति ॥२१॥ इयं ते[4] राण्मित्रस्य यन्तासि यमनो[5] धर्तासि धरुणो रय्यै पोषाय कृष्यै क्षेमाय इत्यवरोहन्तमनुमन्त्रयते ॥ २२ ॥ कृष्णाजिनमासन्द्यामास्तृणाति बस्ताजिने रुक्मँ शतमानस्य[6] कृतम्[6] ॥ २३ ॥ तेजोऽसि इति रुक्मे पादमादधाति पुष्टिरसि प्रजननमसि इति बस्ताजिने ॥ २४ ॥ दिवं प्रोष्ठनीमारोह तामारुह्य प्रपश्यैकराण्मनुष्याणाम् इत्यारोहन्तमनुमन्त्रयते ॥ २५ ॥ तेन धर्मेण परिषिञ्चति ॥ २६ ॥ अत्रैवास्य श्वेतं छत्रं धारयन्त्याजिसरणे[7] वा ॥ २७ ॥ परिधानीयाँ संपाद्य माहेन्द्रेण प्रचरत्यैन्द्रैश्चातिग्राह्यैः ॥२८॥ उपाकृते ब्रह्मसाम्नि सारस्वतप्रभृतीनाँ[8] वपाः सँस्कुर्वन्ति ॥ २९ ॥ प्रायाजिकस्याशेषेणाभिघारयति ॥ ३० ॥ ब्राह्मणाछँसिचमसैः प्रचर्य सह प्राजापत्यमपन्नदत्या वपया प्रचर्य नैवारेण प्रचर्य पशुपुरोडाशैः प्रचरति ॥ ३१ ॥ सहस्विष्टकृदिडं नैवारस्य पशुपुरोडाशानां च ॥ ३२ ॥ पशुकाल इतरैः पशुभिः प्रचरति ॥ ३३ ॥ वनस्पतिस्विष्टकृदिडमिति[9] परिशाययन्ति ॥३४॥

१. Thus emended; B, N, CR यः पर्यैति.
२. B, N °पर्यावर्जयेयुर्देवा.
३–३. Thus emended, B, N, CR इत्यर्वाग्यधिस्त्रिनयति.
४–४. B, N °शेषेणायमवरोहयति यजमानो यं ते.
५. N यमुनाय च.
६. Thus emended; cf. ĀpŚS XVII 5.5; B, N, शतमानस्याराद्; CR शतमानस्. CR reads sutras 23–24 as a single sūtra.
७. Thus emended; B, N, CR °जिरारेण.
८. Thns emended; N तासारस्वती°
९. B, N °दिडामिति.

षोडशिचमसैः प्रचर्य होतृचमसमुख्यान् वाजपेयचमसानुन्नयति ॥३५॥ स्तुतशस्त्रवन्तः ॥३६॥ संपृचः स्थ सं मा भद्रेण पृङ्क्त इति प्राङ्ध्वर्युः सोमग्रहैरुद्द्रवति । विपृचः स्थ वि मा पाप्मना पृङ्क्त इति प्रत्यङ् प्रतिप्रस्थाता सुराग्रहैः ॥ ३७ ॥ पश्चाद्धविर्धानस्य निदधाति ॥ ३८ ॥ ग्रहचमसैः प्रचरन्ति ॥ ३९ ॥ उपोद्यच्छन्ति सुरोपयामान् ॥ ४० ॥ भक्षयन्ति चमसान् ॥ ४१ ॥ उपरि स्थापयन्ति ग्रहान् ॥ ४२ ॥ सारस्वतप्रभृतिभिः पशुभिः[1] प्रचरन्ति ॥ ४३ ॥ सहस्विष्टकृदिडं पूर्वेषां च ॥ ४४ ॥ उपहूतायामिडायाँ वशाया यान्यवदानीयान्यङ्गानि तान्यृत्विग्भ्यो हरन्ति सोमग्रहाँश्च । यान्यनवदानीयानि तान्याजिसृग्भ्यः सुरोपमायाँश्च[2] ॥ ४५ ॥ ककुदं[2] प्रतिहितः प्राश्नाति[3] ॥ ४६ ॥ न वाजपेययाजी कंचन प्रत्यवरोहेन्न प्रत्युपतिष्ठेत् ॥ ४७ ॥ यदि प्रत्यवरोहेत् प्रत्युत्तिष्ठेद्वा बृहस्पतिसवेन यजेत । इन्द्रसवेन राजन्यः ॥४८॥ सम्राडित्येनमाचक्षीरन् ॥ ४९ ॥

॥ इति वाजपेये प्रथमेऽध्याये[4] द्वितीयं खण्डम् ॥

॥ इति प्रथमोऽध्यायः ॥

---

१. Thus emended; N मूर्ध्निनः; CR मूर्ध्नि.

२. Thus emended, cf ĀpŚS VIII.7.9, MānŚS VII. 1.3.33; N शूरो पर्याक्ताजनीनां; CR सुरो [ पयामाँश्च ] पर्याक्ताजनीनां. CR reads sūtras 45–46 as a single sūtra.

३. Thus emended, N प्रस्तौति; B, CR प्रस्तंति.

४. B, N omit.

# द्वादशाहः

इष्टप्रथमयज्ञानां[१] द्वादशाहः ॥ १ ॥ अहीनस्यापि[२] वा ॥ २ ॥ सत्त्रे गृहपतिरेवेष्टप्रथमयज्ञः ॥ ३ ॥ ब्राह्मणानाँ सप्तदशानाँ सतामेको गृहपतिः षोडश ऋत्विजो यजमानाश्चैककल्पाश्च[३] ॥ ४ ॥ एकः[४] त्रयः षट् द्वादश वा ॥ ५ ॥ अदीक्षिता याजयन्त्यहीनेन[४] ॥ ६ ॥ सावित्राणि होष्यन्तो[५] गृहपतेरग्निष्वग्नीन् संनिवपन्ते ब्रह्मा होताध्वर्युरुद्गाता तत्पुरुषाश्चैतेनानुपूर्व्येण[६] ॥ ७ ॥ भवतं नः समनसौ इति जपति यो निवपति येषां[७]चाधिनिवपन्ते[७]॥८॥ पञ्चपशूनाँ यक्ष्यमाणानामेकोऽग्निः ॥ ९ ॥ तत[८] इष्ट्वा[८] विनिवपन्ते ॥ १० ॥ दीक्षिष्यमाणाः संनिवपन्ते ॥ ११ ॥ चैत्रपक्षस्य सप्तम्यां दीक्षन्ते ॥ १२ ॥ द्वादश दीक्षा द्वादशोपसदोऽमावास्यायाँ[९] यजनीयेऽहनि प्रसवः[९] ॥ १३ ॥ गृहपति-

१. Thus emended; B, N, CR इष्टिप्रथमयज्ञानां. CR reads sūtras 1–3 as a single sūtra.

२. B, N प्रमह्निन°.

३. Thus emended; B, N यजमानश्चैवकर्ण्याश्च; CR यजमानाश्चैव कर्ण्याश्च. CR suggested emendation यजमानाश्चैककार्याश्च. cf. MānŚS VII 2.1.6; ĀpŚS XXI. 2.3.

४–४. Thus emended hesitatingly, cf. MānŚS VII. 2.1.3; ĀpŚS XXI. 1.11; B, N, CR एकप्रभृतीनां त्रय (N त्रेय) सँसृतोह्निनोदंकिता याजयंत्यन्नंहितेन ( N नेन).

५. B, N ह्योष्यंते.

६. B, N, CR °पूर्वेण

७. Thus emended; cf. MānŚS VII. 2.1.10; B, N, CR येन येनायँ हुत्वाधिनिवपन्ते.

८. Thus emended; cf. ĀpŚS XXI. 2.13; B, N चमइष्ट्वा; CR तेभिरिष्ट्वा.

९–९. Thus emended; B, N अमावास्याँ यजमानायेह्नि वसुवो; CR अमावास्यां यजनीयेऽह्नि वा.

मुख्यान् मध्यतःकारिणोऽध्वर्युर्दीक्षयते प्रतिप्रस्थाता पत्नीः ॥ १४ ॥ अध्वर्युमुख्यानर्धिनः प्रतिप्रस्थाता नेष्टा पत्नीः ॥ १५ ॥ प्रतिप्रस्थातृमुख्यान् तृतीयिनो नेष्टोन्नेता पत्नीः ॥ १६ ॥ नेष्टृमुख्यान् पादिन उन्नेता स एव पत्नीः[1] ॥ १७ ॥ अदीक्षित उन्नेतारम् ॥ १८ ॥ अभ्युन्दनेन[2] समेत्य पर्यञ्जनेन समीयात् ॥ १९ ॥ एवँ समानजातीयेन तृणान्तर्धानेन सर्वाननुक्रामति ॥ २० ॥ दीक्षिता इमे ब्राह्मणाः इति सर्वानावेदयति ॥ २१ ॥ नामगोत्राण्युक्त्वा त इन्द्राग्निभ्यां दीक्षां प्राहुः इत्याह ॥ २२ ॥ प्रवरणवेलायाँ सकृदाश्राव्य सर्वान् वृणीते । समानार्षेयाणाँ[3] समाननामधेयानां च सकृद्वचनम् ॥ २३॥ कर्मणोऽविप्रतिषिद्धेन सर्वे याजमानं कुर्वन्ति । पराङ् गृहपतिरेव यथा यूपाञ्जनमग्निमन्थनमग्निपरिमाणँ याज्येति ॥ २४ ॥ दीक्षिताः सर्वतो यजमानाः इति गमयन्ति ॥ २५ ॥ एकँ रुक्मँ सर्वे प्रतिमुञ्चन्ति व्यत्यासं[4] च क्रमान् क्रामन्ति ॥ २६ ॥ बहुँ राजानं क्रीणाति ॥२७॥ षोडशिकी राजक्रयणी ॥ २८ ॥ अतिग्राह्याणां प्रयुक्त[5] आग्रायणे[5] पात्रप्रयोजनं प्रातःसवने ग्रहणं च माहेन्द्रमनु होमः ॥ २९ ॥ प्रायणीयोऽतिरात्रः प्रथमसँस्था ॥ ३० ॥ द्वादशभागँ राज्ञोऽवहरति ॥ ३१ ॥ नित्येन मित्वा वायुरसि प्राणो नाम सवितुराधिपत्येऽपानं मे दाः ॥ चक्षुरसि श्रोत्रं नाम धातुराधिपत्य आयुर्मे दाः ॥ रूपमसि वर्णो नाम बृहस्पतेराधिपत्ये प्रजां मे दाः ॥ ऋतमसि सत्यं नामेन्द्रस्याधिपत्ये क्षत्रं मे दाः ॥ भूतमसि भव्यं नाम विश्वेषां देवानामाधिपत्येऽपामोषधीनां गर्भं धाः ॥ ऋतस्य त्वा व्योमने ॥ ऋतस्य त्वा विभूमने ॥ ऋतस्य त्वा विधर्मणे ॥ [ऋतस्य त्वा सत्याय ॥] ऋतस्य त्वा ज्योतिषे ॥ इति दश सप्त त्रयः ॥ ३२ ॥ तासु द्वाभ्यां

१. CR reads स एव पत्नीः as a separate sūtra.

२. Thus N, cf. MānŚS VII. 2.1.23; CR अभ्युन्दनेन. CR reads sūtras 18–19 as a single sūtra.

३. N समारिषाणां; CR समार्षेयाणां.

४. Thus emended; B, N, CR तिव्यपासं.

५. N नोक्तोग्रायणो; CR प्रयुक्तेऽग्रायणे

मिमीते । द्वितीयं नित्येन मित्वा अयं पुरो भूः इति पञ्चमी ॥ ३३ ॥ प्राणग्रहपर्यायाणां प्रथमेन मिमीते प्रजापतिगृहीतेन त्वया प्राणं गृह्णामि इति ॥ ३४ ॥ एतेन धर्मेण व्यत्यासं प्रायणीयोदयनीययोर्दशमे चाहनि ॥ ३५ ॥ यथाकालमुत्तरस्मिन्नहनि वत्सानपाकरोति ॥ ३६ ॥ अदक्षिणानि सत्त्राणि ॥ ३७ ॥ द्वादशशतं दक्षिणा[1] अहन्यहन्यहीने ॥ ३८ ॥ सत्त्रे तु दाक्षिणौ होमौ हुत्वाहरहः कृष्णाजिनानि धूत्वा[2] दक्षिणापथेन व्रजन्ति इदमहं मां कल्याण्यै कीर्त्यै स्वर्गाय लोकायामृतत्वाय [ ददामि इति ] ॥ ३९ ॥ पत्नीसँयाजान्तान्यहान्योत्तरस्मादह्नः[3] ॥ ४० ॥ पुरस्ताद्यज्ञायज्ञियस्य वसतीवरीर्गृह्णाति ॥ ४१ ॥ हारियोजनातिप्रैषप्रेषित आग्नीध्रस्तिष्ठन्[4] सुत्यामावेदयति इन्द्राग्निभ्याँ श्वःसुत्यां प्रब्रवीमि मित्रावरुणाभ्याँ विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोमपेभ्यो ब्रह्मन् वाचँ यच्छ इति ॥ ४२ ॥ [ ब्रह्मा वाचँ ] यच्छत्या वसतीवरीणां परिहरणात् ॥ ४३ ॥ अन्वहं पृष्ठ्यँ षडहमुपयन्ति[5] ॥ ४४ ॥ वसतीवरीः परिहृत्य त्रिवृतमग्निष्टोममुपयन्ति रथन्तरपृष्ठम् ॥ ४५ ॥ माहेन्द्रकाले रथँ शब्दवन्तं बहिर्वेदि दक्षिणतो व्यतिवर्तयन्ति ॥ ४६ ॥ श्वो भूते पञ्चदश उक्थ्यो बृहत्पृष्ठः ॥ ४७ ॥ माहेन्द्रकाले दुन्दुभिमाघ्नन्ति ॥ ४८ ॥ श्वो भूते सप्तदश उक्थ्यो वैरूपपृष्ठः ॥ ४९ ॥ माहेन्द्रस्य स्तोत्रमुपाकरिष्यन् वीजनमुद्गात्रे[6] प्रयच्छति ॥ ५० ॥ श्वो भूत एकविँशः षोडशी वैराजपृष्ठः ॥ ५१ ॥ अग्न आयूँषि पवसा इत्याग्नेयमतिग्राह्यं गृह्णाति ॥५२॥ माहेन्द्रस्य स्तोत्रमुपाकरिष्यन्नरणिशकलमुद्गात्रे प्रयच्छति ॥ ५३ ॥ उद्गातुरूरावग्निं मन्थन्ति ॥ ५४ ॥

१. B, N दक्षिणान्यहन्यहीने.
२. B, N धूत्वा वा.
३. B, N °न्युत्तरस्मा°.
४. B, N °ध्रस्तिस्न:
५. B, N °मुपनयंति.
६. Thus emended; cf. MānŚS VII. 2.2.13.

समाप्ते स्तोत्रेऽध्वर्युः भवतं नः समनसौ इत्यनुप्रहृत्य प्रेद्धो अग्ने इत्यभिजुहोति[1] ॥ ५५ ॥ न्यूङ्खमेतदहर्भवति[2] ॥ ५६ ॥ अग्नेश्च त्वा ब्रह्मणश्च इत्यतिग्राह्यँ हुत्वा अग्न आयुःकार[3] इति भक्षयति ॥ ५७ ॥ मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु इत्यात्मानं प्रत्यभिमृशति ॥ ५८ ॥ मयीन्द्र ओजो दधातु ॥ मयि सूर्यो भ्राजो दधातु इत्युत्तरयोः ॥ ५९ ॥ श्वो भूते त्रिणव उक्थ्यः शाक्वरपृष्ठः ॥ ६० ॥ ओजस्तदस्य तित्विषे इत्यैन्द्रमतिग्राह्यं गृह्णाति ॥ ६१ ॥ माहेन्द्रस्य[4] स्तोत्रमुपाकरिष्यन् तोयावकमुद्गात्रे[5] प्रयच्छति ॥ ६२ ॥ इन्द्रस्य च त्वा क्षत्रस्य च इत्यतिग्राह्यँ हुत्वा इन्द्रौजस्कार[6] इति भक्षयति ॥ ६३ ॥ श्वो भूते त्रयस्त्रिँश उक्थ्यो रैवतपृष्ठः ॥ ६४ ॥ अदृश्रन्नस्य केतवः इति सौर्यमतिग्राह्यं गृह्णाति ॥ ६५ ॥ स्वयमृतुयजुः[7] षष्ठमहः ॥ ६६ ॥ ऋतुयाजप्रैषेण याज्यां संदधाति ॥ ६७ ॥ अध्वर्यो यज इत्युक्तेऽध्वर्युर्यजति[7] ॥ ६८ ॥

॥ इति द्वादशाहे[8] प्रथमं खण्डम् ॥

ये यजामहे अश्विनाध्वर्यू आध्वर्यवादृतुना सोमं पिबतम् ॥
अश्विना पिबतँ सुतं दीद्यग्नी शुचिव्रता । ऋतुना यज्ञवाहसा ॥

१. B, N इत्यग्निं जुहोति.
२. Thus emended; cf. ĀpŚS XXI. 7.2; B, N न्यूंखमूर्ध्वं; CR न्यूङ्खल्यमूर्ध्वं.
३. Thus MS IV. 7.10; B, N आयुष्मत; CR आयुष्कर.
४. B श्वो भूते मा°; N श्वोमा°.
५. B तयोरवकामितिमु°, N तयोर्वकामित्यु°.
६. Thus N; MS IV. 7.3; CR °जस्कर.
७-७. Thus emended; cf. MānŚS VII. 2.2.27-28; ĀpŚS XXI. 7.14-15; B, N, CR पृथिव्या (CR ऋतव्या) पात्रेण स्वयमृतु (N स्वयमनु) मँहल्यवषानन्ति (N न्ती) यजत्यध्वर्युः । यजेत्युक्तेऽध्वर्युर्यजते.
८. CR adds [ द्वितीयेऽध्याये ]

इति समूढे[1] ॥ १ ॥ व्यूढे[1]

अर्वाञ्चमद्य[2] यय्यं नृवाहणँ रथँ युञ्जाथामिह वाँ विमोचनम् ।
पृङ्क्तँ हवीँषि मधुना हि कं गतमथा सोमं पिबतँ वाजिनीवसू ॥

इति ॥ २ ॥ गृहपते यज इत्युक्ते गृहपतिर्यजति ये यजामहेऽग्निं गृहपतिं गार्हपत्यात् सुगृहपतिस्त्वयाग्नेऽयँ सुन्वन् यजमानः स्यात् सुगृहपतिस्त्वमनेन सुन्वता यजमानेन ॥ अग्निर्गृहपतिर्गार्हपत्यादृतुना सोमं पिबतु ॥ गार्हपत्येन[3] सन्त्य ऋतुना यज्ञनीरसि । देवान्[3] देवायते यज इति समूढे[4] ॥ ३ ॥ व्यूढे[4] गायन्ति यदि त्वाद्यापतेभ्यश्च त्वयंति[2] ॥ ४ ॥ अन्यां[5] त्रिष्टुभं द्वितीयां[5] कुर्वीत ॥ ५ ॥ माहेन्द्रस्य काले प्रसदसि वत्सगवाँ साँवाशिनं कुर्वीत ॥ ६ ॥ सूर्यस्य च त्वौषधीनां च इत्यतिग्राह्यँ हुत्वा सूर्यं भ्राजस्कार[6] इति भक्षयति ॥ ७ ॥ तृतीयसवने वालखिल्यान् मैत्रावरुणो विहरति वृषाकपिं ब्राह्मणाछँसी शँसत्येवयामरुतमछावाकः[7] । शिल्पे[8] प्रतिगरः ॥ ८ ॥ समाप्तेऽहनि वाचँ यछत्या रसप्राशनात् ॥ ९ ॥ दीक्षिताः प्राश्नन्ति मधु ॥ १० ॥ अहीने दीक्षितः ॥ ११ ॥

१. Thus emended; B, N, CR समूढेषु ॥ १ ॥ अव्यूढे.

२–२. B, N, CR read this portion after चतुर्होतृनाचष्टे in sūtra 30. But compare MānŚS VII. 2.2.29–31. The *archetypus* of B and N probably inserted at a wrong place this portion which in the original manuscript might have been written in the margin. The context needs the change as effected above. The text of sūtra 4 is corrupt. About this sūtra CR remarked that " there is great confusion in this sūtra. "

३–३. B, N, CR गार्हपत्येऽनु समृतुना ॥ अयँ हि गौरसि.

४. Thus emended; B, N, CR समूढेष्वव्यूढे.

५. B, N, CR सलिलं गातृण्णुयं द्वितीयं. cf. MānŚS VII. 2.2.32.

६. CR भ्राजस्कर.

७. CR शँसेत्ये°.

८. Thus emended. cf. MānŚS VII 2.2.34; B, N, CR शिक्ये.

सँस्थिते पृष्ठ्यषडहे छन्दोमानुपयन्ति ॥ १२ ॥ त्रीण्युक्थ्यानि ॥१३॥ बृहत्पृष्ठावभितो मध्ये रथन्तरपृष्ठः[1] ॥ १४ ॥ रथन्तरपृष्ठश्चतुर्थः ॥ १५ ॥ अविवाक्यं नाम स्मरन्ति ॥ १६ ॥ अन्यतिशिल्पे[2] ब्रह्मा गृहपतिरुपद्रष्टा वा चित्रतया तु या वाहिरक्षरँ व्यञ्जनैस्तानि होता परोक्षमनुष्टुभँ[2] संपादयेत् ॥ १७ ॥ समाप्तेऽहन्याहवनीयमुपतिष्ठन्ते

अयँ सहस्रमानवो[3] दृशः कवीनां मतिर्ज्योतिर्विधर्म ।
ब्रध्नः समीचीरुषसः समैरयन् ॥
अरेपसः सचेतसः स्वसरे मन्युमन्तश्चिता गोगोः ॥

इति ॥ १८ ॥ निधनमुपयन्ति ॥ १९ ॥ हविर्धाने मानसं ग्रहं गृह्णाति पृथिव्या पात्रेण समुद्रँ रसामनुपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि इति ॥ २० ॥ स्तुतशस्त्रवान् भवति[4] ॥ २१ ॥ भक्षणं[4] मनसा कुर्वीत ॥ २२ ॥ परिधानीयाँ संपाद्याभिमुखो होतारमुपविशति ॥ २३ ॥ आमन्त्रयते[5] होता अध्वर्यो ब्रह्म वदिष्यावः ॥ २४ ॥ उच्चैस्तराँ होतः इत्यध्वर्युः ॥ २५ ॥ चित्तिः स्रुगध्वर्यो होता ॥२६॥ चित्तमाज्यम् । अध्वर्युरामन्त्रयते होतर्ब्रह्म वदिष्याव इत्युच्चैस्तराम् ॥ २७ ॥ तथाध्वर्यो इति तिष्ठति ॥२८॥ " ओ श्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम् । यजेति द्व्यक्षरम् । ये यजामह इति पञ्चाक्षरम् । द्व्यक्षरो वषट्कारः । एष वै होतः प्रजापतिः सप्तदशो[6] यज्ञेऽन्वायत्तः । यद्यनुवाक्याया एति यदि याज्याया अत-

1. CR added by conjecture.
2-2. The sutra is partly corrupt and unintelligible.
3. CR °मनवे.
4. Thus emended; भक्षयत्याभक्षण; N भवत्याभक्षण; CR भवति आसादनभक्षणं.
5. CR divides sūtras 24–29 differently.
6. B, N, CR सप्तदशोपयथा होता येषां वै होतः प्रजापतिः सप्तदशो. The ending portion of this sūtra, अरात्स्म होतः इति seems to be a wrong addition, being probably a duplication of identical wording from sūtra 31.

श्वेदेवं नैति । नास्य यज्ञो व्यथते । प्रजापतौ यज्ञेन प्रतितिष्ठति" (मै. सं. १.४.११)। अरात्स्म होतः इति ॥ २९ ॥ एतेन धर्मेण चतुर्होतॄनाचष्टे[1] नैषाँ यज्ञो व्यथते । प्रजापतौ यज्ञेन प्रतितिष्ठति ॥३०॥ अरात्स्म होतः इत्यन्तमुच्चैः । ओमध्वर्यो तथाध्वर्यो इति प्रतिगरः[2] ॥ ३१ ॥ ग्रहेण प्रचर्य ग्रहशेषं प्रजापतिपीतं भक्षयन्ति ॥ ३२ ॥ तार्तीयसवनिको भक्षमन्त्रः ॥ ३३ ॥ यत्समीक्षते स उपहवः ॥३४॥ उपसृजन्[3] धरुणम्[3] इत्यौदुम्बरीमन्वारभन्ते ॥ ३५ ॥ वागैतु वागुपैतु वाक्समेतूप मैतु वाग्भूर्भुवः स्वः इत्यन्वारभ्य वाचँ यछत्याधिवृक्षसूर्यादा वा नक्षत्रदर्शनात् ॥ ३६ ॥ वाचँ विसृज्याग्नीध्रीयमुपतिष्ठन्ते

युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तं
तमिद्धतँ वज्रेण तं तमिद्धतम् ।
दूरे चत्ताय छन्त्सद्गहनं यदिनक्षत् ।
अस्माकँ शत्रून् परि शूर विश्वतो दर्मा[4] दर्षीष्ट[4] विश्वतः ॥

इति ॥ ३७ ॥ श्वो भूत उदयनीयोऽतिरात्रः ॥ ३८ ॥ स प्रायणीयेन व्याख्यातः ॥ ३९ ॥ अथ[5] ग्रहाग्राणि[5] ॥ ४० ॥ समूढं चेदैन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः । इतरेषां नवानामैन्द्रवायवाग्रं प्रथममहः । अथ शुक्राग्रमथाग्रायणाग्रमिति त्रिरभ्यस्य ॥ ४१ ॥ व्यूढस्यैन्द्रवायवाग्रौ प्रायणीयोदयनीयौ । इतरेषां दशानामैन्द्रवायवाग्रं प्रथममहः । अथ[6] शुक्राग्रम्[6] । अथ द्वे आग्रायणाग्रे अथैन्द्रवायवाग्रमथ

---

१. See footnote to sūtra 2 above.

२. B, N, CR प्रतिचारो.

३. B, N, CR उप स्वजा वरुणम्.

४. B, दर्मादार्षष्ट; N; दर्संदर्शाकाष्ठ.

५. B, N, CR होता कर्माणि कुरुते (N कुर्वते). cf. ManŚS VII. 2.4.1

६. Thus N; CR omit.

द्वे शुक्राग्रे अथाग्रायणाग्रमथ द्वे ऐन्द्रवायवाग्रे ॥ ४२ ॥ व्यूढस्योत्तरस्मिन् पृष्ठ्यत्र्यहे[१] छन्दोमानां[२] च[१] जगत्यः प्रातःसवनं भजन्ते गायत्र्यो माध्यंदिनं त्रिष्टुभस्तृतीयसवनम् ॥ ४३ ॥ छन्दोमानामव्यूढेऽनुष्टुभः[३] प्रातःसवनं भजन्ते जगत्यो माध्यंदिनं गायत्र्यस्तृतीयसवनम् ॥ ४४ ॥ पवमानाभिमन्त्रणं भक्षणमिति यथाछन्दः ॥४५॥ "कृष्णशीर्षाग्नेयः" (मै. सं. ४.७.८) इत्यैकादशिनाः ॥ ४६ ॥ तानन्वहं विहृतानालभन्ते ॥ ४७ ॥ अजमाग्नेयमुदयनीये[४] ॥ ४८ ॥ उद्वसानीयाभिरिष्ट्वा[४] ज्योतिष्टोमैः पृष्ठशमनीयैरतिरात्रैर्यजेरन् ॥४९॥ पृष्ठ्यव्यसने पृथगुद्वसानीयाभिरिष्ट्वा[५] ज्योतिष्टोमेन यजेरन् ॥ ५० ॥ द्वादशाहेन सत्राहीना व्याख्याताः ॥ ५१ ॥

॥ इति द्वादशाहे[६] द्वितीयं खण्डम् ॥

---

१. Thus emended; cf. MānŚS VII. 2.4.4; N व्यूढस्योतस्मिन्नु- पृष्ठ्यतेहे; B, CR व्यूढस्यैतस्मिन्पृष्ठ्ये षडहे ( B पृष्ठ्यहेहे ).
२. Thus emended; B, N, CR छंदोगानां.
३. Thus emended; B, N छंदोभिर्किव्यूहेनान्युष्टुभः; CR छन्दोभिर-व्यूहेनानुष्टुभः
४. B, N अजमाग्नेय इत्यस्थावसरा°; CR° मुदयनीयः । उदव°.
५. CR पृथगवसा°.
६. CR adds [ द्वितीयेऽध्याये ].

# गवामयनम्

गवामयनम् ॥१॥ माघपौर्णमास्याश्चतुरहे[1] पुरस्ताद्दीक्षन्ते ॥२॥ तामिस्रस्याष्टम्यामाग्निक्यो[2] ज्यौत्स्नस्य[2] पञ्चम्यां प्रसवः ॥३॥ समानः प्रायणीयः ॥४॥ उक्थ्यो द्वितीयमहरग्निष्टोमो वा ॥५॥ अन्वहमभिप्लवँ षडहमुपयन्ति ॥६॥ ज्योतिरग्निष्टोमो रथन्तरपृष्ठो गौरुक्थ्यो बृहत्पृष्ठ आयुरुक्थ्यो रथन्तरपृष्ठः पुनर्गोआयुषी ज्योतिरग्निष्टोमो रथन्तरपृष्ठ एव[3] ॥७॥ चतुरोऽभिप्लवानुपयन्ति[4]। पृष्ठ्यः। स मासः ॥८॥ ताँश्चतुरो[5] मासानुपयन्ति[5] ॥९॥ त्रयोऽभिप्लवाः पृष्ठ्योऽभिजित्स्वरसामान उक्थ्या वाग्निष्टोमा वा ॥१०॥ तेष्वन्वहँ[6] संततानतिग्राह्यान् गृह्णाति[6] ॥११॥ उपयामगृहीतोऽस्यद्भ्यस्त्वौषधीभ्यः इति गृहीत्वा अद्भ्य ओषधीभ्यः स्वाहा इति प्रथमेऽहनि जुहोति ॥१२॥ ओषधीभ्यस्त्वा प्रजाभ्यः इति गृहीत्वा ओषधीभ्यः प्रजाभ्यः स्वाहा इति द्वितीये ॥१३॥ प्रजाभ्यस्त्वा प्रजापतये इति गृहीत्वा प्रजाभ्यः प्रजापतये स्वाहा इति तृतीये ॥१४॥ स मासः[7] ॥१५॥ स पूर्वः पक्षः ॥१६॥ श्वो भूते विषुवान् दिवाकीर्त्योऽग्नि-

---

१. Thus N; CR पौर्ण° cf. MānŚS VII. 2.4.13.

२. Thus emended; B, N, CR °म्यामृत्विग्भ्यो (N °त्विजोभ्यो) ऽग्निष्टोमस्य. cf. MānGS I.23.5;21.2; II 1.2; MānŚS I.6.2.4; IV. 7.1;8.1; IX. 3.1. 2; ŚankhŚS XIII. 19.6.

३. B, N व

४. CR breaks the sūtra here.

५. B, N तानुमत्राप°

६–६. Thus emended; B, N तेष्ववृहंतात्संततारतिग्राह्यं गृह्णाति; CR तेष्ववृत्ता संततिः ॥१२॥ अतिग्राह्यं गृह्णाति cf. MānŚS VII. 2.4.20.

७. CR reads sutras 15–16 as a single sūtra.

ष्टोमः ॥ १७ ॥ उदिते प्रातरनुवाकमुपाकरोति ॥ १८ ॥ आवृत्तान्[1] संतनीन् गृहीत्वा उदु त्यं जातवेदसम् इति सौर्यम् । वृत्तान् संतनीन् गृहीत्वा वाचस्पतिम् इति वैश्वकर्मणं महीमू षु मातरम् इत्यादित्यम् ॥ १९ ॥ सौर्यँ श्वेतमजँ सवनीयं तन्त्रमुपालम्भ्यमारभेरन् ॥ २० ॥ प्रागस्तमयादह्नः सँस्थापयन्ति ॥ २१ ॥ सूर्यो देवः इत्यस्तमिते जुहोति ॥ २२ ॥ विषुवन्तमुपेत्यावृत्ताँश्च स्वरसाम्न उपयन्ति ॥ २३ ॥ [ आवृत्ताः संतनयस्तेषां प्रथम ] आदित्यँ श्वो भूते वैश्वकर्मणम् ॥२४॥ व्यत्यासं गृह्णात्या महाव्रतात् ॥ २५ ॥ उभौ महाव्रते ॥ २६ ॥ पृष्ठ्याभिप्लवानावृत्तानुत्तरस्मिन् पक्ष उपयन्ति[1] ॥ २७ ॥ विश्वजितं

---

१–१. This long passage of sūtras 19–27 is largely reconstituted. B, N CR read it as follows :-
अवृत्तान् संततीन् ( N संतनीन् ) गृहीत्वोदु त्यं जातवेदसमिति स्तोत्र आदित्यं वृतान् संततीन् ( N संतनीन् ) गृहीत्वा वाचस्पतिमिति वैश्वकर्मणमिति ॥२०॥ आदित्यँ श्वो भूते वैश्वकर्मणं व्यत्यासं गृह्णात्या महाव्रतात् ॥ २१ ॥ उभे ( N उभौ ) महाव्रते ॥ २२ ॥ सौर्यं श्वेतमजँ सवनीयं तन्त्रमुपालम्भमारभेरन् ॥ २३ ॥ प्रागस्तमयादह्नः सँस्थापयन्ति ॥ २४ ॥ वैश्वकर्मणं महीमू षु मातरमित्याह्न्यम् ॥ २५ ॥ सूर्यो देव इत्यस्तमिते जुहोति ॥ २६ ॥ पृष्ठ्याभिप्लवान्मासाँस्त्वावृत्तानुत्तरस्मिन् पक्ष उपयन्ति ॥२७॥ विषुवतमुपेत्यावृत्ताँश्च स्वरसाम्न उपयन्ति ॥ २८ ॥

About sūtra 20 CR has noted that " there is great confusion in the text of this sūtra. " As a matter of fact the confusion is not limited to sūtra 20 alone. About sūtra 27 CR rightly says that " we expect पृष्ठ्याभिप्लवानावृत्तान् " dropping मासाँस्तु. The passage is intended to prescribe the rites to be observed on the Viṣuvant day and also some of the following days including the three Svarasāman sacrifices.

On comparing the above passage with MānŚS VII. 2.5. 3–10 and ĀpŚS XXI. 21. 3–11 one finds that

( continued on the next page )

पृष्ठ्यं त्रीनभिप्लवान् ॥ २८ ॥ चतुरो मासानुपयन्ति ॥ २९ ॥ त्रीनभिप्लवानायुर्गोर्दशाहो महाव्रतमिति द्विसंभार्यताम् ॥ ३० ॥ एकसंभार्यता हविषामृद्धौ[१] । विश्वजितैः पञ्च मासानुपेत्य द्वावभिप्लवावायुर्गोर्दशाहो महाव्रतमुपयन्ति तेन त्वावृत्तान् स्वरसाम्न[२] उपयन्ति[२] ॥ ३१ ॥ विश्वजितं[३] पृष्ठ्यं त्रीनभिप्लवान् ॥ ३२ ॥ चतुरो मासानुपेत्यैन्द्रवायवः शुक्र आग्रायण इति ग्रहाग्राणि ॥ ३३ ॥ नैकमावर्त[४] षण्मासान् ॥ ३४ ॥ अथ[५] शुक्राग्रे द्वे[५] विषुवान् ॥ ३५ ॥ आवृत्योत्तरस्मिन्नुपक्रामम् ॥ ३६ ॥ अपि वा यथा पृष्ठे प्रतिक्रतो यथाभिप्लवे स्वरसाम[६] च ॥ ३७ ॥ शेषे यथादिष्टम् ॥ ३८ ॥ आग्नेयोऽज॰[७] उदयनीये[७] ॥ ३९ ॥ अपि[८] वा विहृतानैकादशिनानावर्तमा दशरात्रस्य चतुर्थादह्नः[८] ॥ ४० ॥ वैष्णवँ वामनं चतुर्थेऽहनि । ऐन्द्राग्नं पञ्चमे ।

....................

( continued from the preceding page )

there is a confusion in the VārŚS passage which may be attributed to the defective copying by the scribes. Taking into account the subject-matter, the sūtras can be suitably rearranged with certain modifications and a minimum conjectural addition as adopted above. Besides the corrupt readings, the confusion can be detected in sūtra 21 ( आदित्यँ ), sūtra 25 ( incomplete and out of context ) and sūtra 28 ( which is also out of context ).

१. Thus emended; B, N, CR हविनामृद्धौ. The entire sūtra is obscure. द्वावभिप्लवा॰ emended for द्वावुपप्लवा॰.

२. Thus emended; B, N, CR सरसानुपयन्ति.

३. Thus emended B, N, CR विश्रजितँ; cf. sūtra 28 *infra* CR reads sūtras 32–34 as a single sūtra.

४. ?

५. N शुक्राग्रे दिविषु.

६. B, N स्वरवामस.

७. B, N, CR आग्नेयाय सवन ऐन्द्राग्नौ. cf. MānŚS VII. 2.4.10.

८–८. B, N अपि विहृत्य ( N वाहृत्य ) नैकादशानिनावर्तमानदशरात्रस्य चतुरादह्नो.

वैश्वदेवँ षष्ठे । द्यावापृथिव्यं प्रथमे छन्दोमे । तस्याश्वतरवत्सँ वायवे नियुत्वते द्वितीये । अविँ वशामुत्तमे । मैत्रावरुणीँ वशामविवाक्ये । प्राजापत्यं तूपरं महाव्रते ॥ ४१ ॥ अपि वा प्रायणीयोदयनीययोर्विभक्तानैकादशिनानालभेरन्नैन्द्राग्नानन्तरा[१] ॥ ४२ ॥

॥ इति द्वादशाहे[२] तृतीयं खण्डम् ॥

यद्युत्सर्गिणामयनं[३] कुर्युर्द्वितीयस्य मासस्य प्रथममहरुत्सृजेरन्नपि चोत्तरेषां मासानां प्रथमान्यहानि[४] ॥ १ ॥ उत्तरस्य च पक्षस्यासंभार्याणां मासानां प्रथममाभिप्लविकमपि चोत्तरेषां मासानां प्रथमान्याभिप्लविकानीति ॥ २ ॥ अर्धमासेभ्यस्त्रयोऽभिप्लवास्तेषां[४] मध्यमस्य प्रथमम्[५] ॥ ३ ॥ एकसंभार्ये द्वयोरभिप्लवयोः ॥ ४ ॥ अपि वा यदहः पूर्णमास्यमामावास्यँ वा तदहरुत्सृजेरन् ॥ ५ ॥ श्व उत्स्रष्टामहे इतीन्द्राय वत्सानपाकुर्वन्ति[६] ॥ ६ ॥ श्वो भूते प्राजापत्यं पशुमालभेरन् ॥ ७ ॥ तस्य वपया[७] प्रचर्याग्नेयेनाष्टाकपालेन[७] सवनीयेनाष्टाकपालेन वैश्वदेवेन वारुणेनाथैन्द्रेणेति[८] प्रचरति ॥ ८ ॥ माध्यंदिनस्य सवनस्य स्थाने पशुपुरोडाशैः प्रचर्यैकादशकपालेन सवनीयेनैकादशकपालेन मरुत्वतीयेनैकादशकपालेन वारुणेनाथैन्द्रेणेति[८] प्रचरति ॥ ९ ॥ तृतीयसवनस्य स्थाने पशुना प्रचर्य सवनीयेन द्वादशकपालेन वैश्वदेवेन द्वादशकपालेन

१. B, N add गवामयनम्.
२. CR adds [ द्वितीयेऽध्याये ].
३. B, N यद्युत्सर्गिणोमंथनं
४-४. Thus N; CR प्रथमान्याभिप्लविकान्यर्धमासेभ्य°
५. CR does not break the sūtra here.
६. B, N, CR वत्सानुपा°; cf. MānŚS VII. 2.8.10; ĀpŚS XXI. 24.3.
७. B, N चथोपर्या°; CR वपोपर्या°; cf. MānŚS VII. 2.8.15; ĀpŚS XXI. 24.5.
८. B, N वारुणाद्यैंद्रेणेति; CR वारुणेन्द्रेणेति.

चरुणा[1] चाग्निमारुतेनेति[1] प्रचरति ॥ १० ॥ पृषदाज्येन चरित्वा पत्नीः सँयाजयन्ति ॥ ११ ॥ अनुसवनमेके पयः समामनन्ति प्रतिधुक् प्रातःसवने शृतं माध्यंदिने दधि तृतीये सवने ॥ १२ ॥ यदि[2] दीक्षासु प्रदीक्षिता अतिरिक्तास्ते विहारं कृत्वा दण्डप्रदानान्तेऽग्निमभ्यस्य वाग्यता आवेदयेयुः ॥ १३ ॥ यद्याग्नीध्रीये प्रणीते दीक्षेतान्तरितँ श्वो विहारं करोति क्रयँ वेदिँ सदो हविर्धानँ सोमप्रणयनमिति ॥ १४ ॥ धिष्ण्यान्न्युप्योपतिष्ठते ॥ १५ ॥ पार्श्वतः शालामुखीयस्याहवनीयं प्रतिष्ठाप्य तस्मादौत्तरवेदिकं प्रणयेदाग्नीध्रीयं च ॥ १६ ॥ यद्यस्याग्नीध्रीयमाहवनीयशेषँ शालामुखीयेन सँसृजति अग्निभ्यां प्रणीयमानाभ्यामनुब्रूहि इति संप्रेष्यति ॥ १७ ॥ अग्निभ्यामग्निँ सँसृजति ॥ १८ ॥ सर्वत्र समानशीलः सुत्यासूपपद्येत[2] ॥ १९ ॥

॥ इति द्वादशाहे[3] उत्सर्गिणां चतुर्थं खण्डम् ॥

अग्निष्टोमः[4] पञ्चविँशो महाव्रतम्[4] ॥१॥ उदिते प्रातरनुवाकमुपाकरोति ॥ २ ॥ दधिग्रहेण प्रचर्यादाभ्यं दधिग्रहपात्रेण गृह्णाति

---

१. Thus emended B, N च चरुणाग्नि°; CR चरुणाग्नि°

२-२. B, N, CR यदि दीक्षासु प्रदीक्षितारिततस्ते विहारं कृत्वा दण्डप्रदानान्तेऽग्निमभ्यस्य वाग्यतमवेदयेद्याग्नीध्रीये प्रणीतौ यदीक्षेतान्तरितँ श्वो विहारं करोति क्रयँ वेदिसदो हविर्धानँ सोमप्रणयनमिति परिहासं न्युपाथ याज्ञाग्नी पार्श्वतः शालामुखीयस्याहवनीयं प्रतिष्ठाप्य तस्मादौत्तरवेदिकं प्रणयंदाग्नीध्रीयँ यद्यस्याग्नीध्रीयमाहवनीयशेषँ शालामुखीयेन सँसृजत्यग्निभ्यां प्रणीयमानाभ्यामनुब्रूहीति संप्रेष्यत्यग्निभ्यामग्निँ सँसृजति सर्वत्र समानशीलस्सुतपासुपद्येत. CR says in the foot-note that "from here upto the end of this section the entire passage is unintelligible and hence we had to leave it unpunctuated."

३. CR adds [ द्वितीयेऽध्याये ].

४-४. Thus emended; cf. MānŚS VII. 2.6.1; ĀpŚS XXI 17.1; B, N अग्निष्टोमव्रतं पृष्ठौ महाव्रतं दिवाकीर्त्यं; CR अग्निष्टोमँ व्रतपृष्ठं म. व्रतम

॥ ३ ॥ अग्नये[1] त्वा प्रवृहामि इति पर्यायैस्त्रीनँशून् प्रवृह्य निग्राभ्याणामपत्यानामँशून् चतुराधूनोति रेशीनां त्वा पत्मन्नाधूनोमि इति द्वाभ्यां द्वाभ्यां पर्यायाभ्याम् ॥ ४ ॥ अग्निः प्रातः इति गृह्णाति उपयामगृहीतोऽसि शुक्रं त्वा शुक्र शुक्राय इति च ॥५॥ आ समुद्रा इत्युत्तिष्ठति ॥ ६ ॥ वसूनामाधीतौ इति जुहोति ॥ ७ ॥ उशिक् त्वं देव सोम इति पर्यायैरशुष्कानँशूनप्यस्यति ॥ ८ ॥ गौरीवितमुद्गाता गायति[2] ॥ ९ ॥ पुरस्तादुपाँश्वभिषवस्याँशूनादत्ते ग्रहपात्रे ॥ १० ॥ वरं दत्त्वा सकृदभिषुत्य सकृद् गृह्णात्यभिप्राणन् ॥ ११ ॥ " पराचीनेन प्राणता " ( मै. सं. ४.७.७ ) इति ब्राह्मणव्याख्यातम् ॥ १२ ॥ अव्यवानं गृह्णाति जुहोति च ॥ १३ ॥ यदि व्यवान्याद्धिरण्यमभि व्यवान्यात् ॥१४॥ कया नश्चित्र आभुवद् इति मनसा प्रजापतये इति गृहीत्वा दधन्वे वा यदीमनु इति जुहोति ॥ १५ ॥

आ नः प्राण एतु परावत आन्तरिक्षाद्दिवस्परि ।
आयुः पृथिव्या अधि ॥

अमृतमसि । प्राणाय त्वा इति हिरण्यमभि व्यवान्यात्[3] ॥ १६ ॥

इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो वातो बृहस्पतिः ।
वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना ॥

इत्युदकं स्पृशति ॥ १७ ॥ वासोऽधीवासश्चतस्रो धेनूर्द्वादश[4] हिरण्यं चैतेषामेकं दानम् ॥१८॥ अँश्वदाभ्यौ[5] च सर्वयज्ञेषु ॥१९॥ भ्रातृव्यवतादाभ्यो ग्रहीतव्यः सत्त्रे साहस्रे सर्ववेदसे सर्वस्तोमे सर्वपृष्ठे विश्वजिति वाजपेये राजसूयेऽश्वमेधे तेषु बुभूषता ॥२०॥ अतिग्राह्यान्[6]

१. CR has joined अग्नये त्वा प्रवृहामि इति पर्यायैः to sūtra 3; but see MS I. 3.36; IV. 7.7.
२. CR reads sūtras 9-10 as a single sūtra.
३. CR व्यनेयात्
४. CR adds [ वा ]
५. Thus emended; B, N आत्यदाभ्येक्वा; CR अँशावदाभ्य.
६. B, N श्वरतिग्राह्यान्.

गृह्णाति। उपयामगृहीतोऽसीन्द्राय त्वार्कवते जुष्टं गृह्णामि इत्यनुषजेत् ॥ २१ ॥ इन्द्रमिद्गाथिनः इति पूर्वार्ध्ये[1]। अभि त्वा शूर नोनुमः इति दक्षिणार्ध्ये[2]। त्वामिद्धि हवामहे इत्युत्तरार्ध्ये[3]।

इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः।
यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधातु ॥

इति पश्चार्ध्ये[4]।

तदिदास भुवनेषु ज्येष्ठँ यतो जज्ञ उग्रस्त्वेषनृम्णः।
सद्यो जज्ञानो निरिणाति शत्रूनन्नु यँ विश्वे मदन्त्यूमाः ॥

इति मध्यमे ॥ २२ ॥ वृष्टिग्रहं गृह्णाति मार्त्तिके चतुष्टने[5]

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व।
मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु ॥

इति। उदीरयता मरुतः ॥ सुत्रामाणम् ॥ महीमू षु मातरम् इति चतुः प्रत्यृचम्। अदित्यै त्वा[6] चतुरूध्न्यै[6] जुष्टं गृह्णामि इत्यनुषजेत् ॥२३॥ वैषुवताननुपृष्ठ्यानतिग्राह्यान्[7] वैश्वकर्मणादित्यौ सारस्वतवैष्णवाविति गृह्णाति ॥ २४ ॥ माहेन्द्रस्य[8] स्तोत्र औदुम्बरीमासन्दीमुद्गातारोहति ॥२५॥ औदुम्बरौ[9] कूर्चौ फलका[9]। वाणँ शततन्तुं मौञ्जैस्तन्तिभिर-

---

१. B, N, CR पूर्वार्धे.
२. B, N, CR दक्षिणार्धे.
३. B, N, CR इत्युत्तरार्धे.
४. B, N, CR पश्चार्धे.
५. B चतुष्टे; N चतुष्ट.
६. Thus emended; cf. ManŚS VII. 2.6.7; B, N त्वा चतुर्थं; CR त्वेति चतुर्थं.
७. Thus emended; B, N, CR वैषुजननुपृष्ठ्यामति°.
८. Thus N; CR महेन्द्रस्य.
९. Thus emended; B, N, CR औदुम्बरीं कुर्वीतयद्या; cf. ManŚS VII. 2.7.3, ApŚS XXI. 17.14.

ध्वर्युरुद्गात्रे[1] प्रयच्छति ॥ २६ ॥ ततः[2] पत्न्यश्च वादयन्ति शङ्खान्नाऽऽलीकान्[2] तूणवानपाघाटलिकाः[3] पिच्छोलाः[3] काण्डवीणाश्च ॥ २७ ॥ वेदिस्रक्तिषु दुन्दुभीनाघ्नन्ति ॥ २८ ॥ भूमिदुन्दुभिः पश्चमः पश्चादाग्नीध्रीयस्य सवनीयस्य चर्मणापिहितः ॥ २९ ॥ तस्य पुच्छेन वादयन्ति ॥ ३० ॥ पुरस्तादाग्नीध्रीयस्यान्तर्वेदि ब्रह्मचारी । बहिर्वेदि पुँश्चली ॥ ३१ ॥ ब्रह्मचारिणमाह[4] अनार्यकर्मन्नवकीर्णिन् दुश्चरितिन् इति ॥ ३२ ॥ धिक्त्वा जाल्मि पुँश्चलि परस्यार्यजनस्य मार्जनि इति ब्रह्मचारी प्रत्याह ॥ ३३ ॥ अन्तर्वेद्यभिगरो बहिर्वेद्यपगरः ॥ ३४ ॥ नारात्सुरिमे सत्रिणः इत्याहापगरः[5] उरसः[5] केशान् प्ररोह्य पशून् पिष्ट्वा पवमाना दभ्रलोकमभ्यर्चन्त[6] आसिषत इति ॥ ३५ ॥ अरात्सुरिमे सत्रिणः इत्याहाभिगरः तपस्विनो वरक्लृप्तिनो जयप्ररोहावुपेप्सन्तः[7] स्वर्गलोकमभ्यर्चन्त आसिषत इति ॥ ३६ ॥ परिश्रयति मिथुनचारिभ्यां दक्षिणापरां प्रति वेदिश्रोणिं बहिर्वेदि ॥ ३७ ॥ तौ मिथुनं संभवतः ॥ ३८ ॥ अग्रेण मार्जालीयँ शूद्रार्यौ चर्ममण्डले व्यायच्छेते कृष्णशुक्लँहते कुकुदावरेऽभ्यन्तरतःपार्श्वे ॥ ३९ ॥ अन्तर्वेद्यार्यः ॥ ४० ॥ बहिर्वेदि शूद्र आह इम उद्वासीकारिण इमे दुर्भूतमक्रन् इति ॥ ४१ ॥ इमेऽरात्सुरिमे सुभूतमक्रन् इत्याहार्यः ॥ ४२ ॥ संजित्य प्रसदंस्यध्यस्यत्युपरिष्टाच्छु-

१. Thus emended; B, N मौंजिग्रन्थिभिर°; CR मौञ्जि[भि]र्ग्रन्थिभिर° cf. MānŚS VII. 2.7.4.

२-२. Thus emended cf. ĀpŚS XXI. 19.3-4; B, N, CR ध्वर्युरन्यश्चैकत्वदिष्टं त्रित्यं मासपूजा.

३. Thus emended; cf. ĀpŚS XXI. 17.16; 19.3; B, N, CR दघाज्युदुलिकापिष्ठेकाः.

४. CR [ सा ] ब्रह्म°

५. N इत्याहारकस्मुरसः; CR इत्याहापगर ओरसः.

६. Thus emended; B, N, CR दग्नलोक°.

७. Thus emended; B, N, CR जयप्ररोहापक्सुपयन्तः.

क्लमवस्तात्ककदम् ॥ ४३ ॥ मार्जालीयन्यन्ते[1] कुम्भीः[2] प्रयछति ॥ ४४ ॥ परियन्ति चतस्रः षडष्टौ वा दास्यश्चतुः प्रत्यृचम्

गावः सुरभयो नित्यं गावो गुग्गुलुगन्धयः ।
गावो घृतस्य मातरस्ता इह सन्तु भूयस्यः ॥

इदं मध्विदं मधु इति पादाभिघ्नन्ति ॥ ४५ ॥

न[3] वै[3] गावो मागीरस्य गङ्गाया उदकं पपुः ।
पपुः सरस्वत्या नद्यास्ताः प्राचीश्चोज्जगाहिरे ॥
एता वयं प्लवामहे शम्याः प्रतरतामिव ।
निकीर्थं तुभ्यं मध्य आकर्ष्ये कार्ष्यो यथा ॥
यदा राघटी वदतो ग्राम्यमनिरसाकसैजनस्य ।
भद्रे मेऽवतां राज्ञे राज्ञः परीक्षितः ।
कर्मग्रामोऽवरुन्ध्देतानडुांस्तप्यते वहन् ॥

इति ॥ ४६ ॥ परीत्य मार्जालीयँ यथार्थं गछन्ति ॥ ४७ ॥ उत्तरतस्तीर्थस्य वार्शं चर्म व्यधायोपकल्पयति[4] ॥ ४८ ॥ दक्षिणतः संजानप्रपावधाः[5] क्षत्रिया रथेषु कवचिनः संनद्धा विध्यन्ति ॥ ४९ ॥ विहारं त्रिः[6] पर्यायन्ति ॥५०॥ सारथयो[7] भवन्ति ॥ ५१ ॥ मध्ये ग्रीवासु[8] भसदि[8] । प्रतिदिशमिषूनस्त्वायन्ति ॥ ५२ ॥ प्राप्तानर्हन्ति ॥ ५३ ॥ स्तोत्रान्ते शब्दाः शाम्यन्ति ॥५४॥ औदुम्बरं प्रेङ्खँ होता-

१. Thus emended; cf. ĀpŚS XXI. 18.7; B, N मार्जालीयांति; CR मार्जालीयान्ते.
२. Thus emended B, N कुनिभ्यः; CR कुम्भीभ्यः
३. Thus B, N, MānŚS VII. 2.7.10; CR, ĀpŚS XXI. 20.3 ननु.
४. Thus emended, cf. ĀpŚS XXI. 18.5; B, N, CR वधायोप°.
५. ?
६. Thus emended; B, N त्रिसंतं; CR त्रिषतं.
७. B, N सारयतो.
८. Thus emended; B, N ग्रीवास्वभंतोग्निवा; CR ग्रीवासु भसदोऽग्रें वा.

रोहति ॥ ५५ ॥ औदुम्बरं फलकमपादमध्वर्युः ॥ ५६ ॥ तस्मिन् प्रतिगृणाति ॥ ५७ ॥ एकं महच्छस्त्रं परःशतं शंसति ॥५८॥ परिधानीयाँ संपाद्य मध्यमेऽतिग्राह्ये[१] ग्रहान् समवनयति[१] ॥ ५९ ॥ त्वे क्रतुमपि वृञ्जन्ति विश्वे इति पूर्वार्ध्यस्य[२]। द्विर्यदेते त्रिर्भवन्त्यूमाः इति दक्षिणार्ध्यस्य[३]। स्वादोः स्वादीयः स्वादुना सृजा सम् इत्युत्तरार्ध्यस्य[४]। अत ऊ षु मधुनाभियोधि इति पश्चार्ध्यस्य[५] ॥६०॥ वृष्टिग्रहमुपशये[६] पर्यासिच्य माहेन्द्रेण प्रचरत्यतिग्राह्यैश्च ॥ ६१ ॥ ग्रहान् समवनीय सर्वे भक्षयन्ति महस्ते भक्षयामि यशस्ते भक्षयामि स्तोमं ते भक्षयाम्यन्नाद्यं ते भक्षयामि प्रजां मे भक्षयामि प्रतिष्ठां भक्षयामि इति ॥ ६२ ॥ प्रागस्तमयादहः सँस्थापयन्ति ॥ ६३ ॥ सूर्यो देवः इत्यस्तमिते जुहोति ॥ ६४ ॥

॥ इति द्वादशाहे[७] महाव्रतं पञ्चमं खण्डम् ॥

---

१–१. Thus emended B, N, CR मध्यमैक्यग्रहा( N ग्रहणा) नमसवनयति.

२. B, N, CR पूर्वार्धस्य.

३. B, N, CR दक्षिणार्धस्य.

४. B, N, CR °रार्धस्य.

५. B, N, CR पश्चार्धस्य.

६. Thus emended; B, N विद्रयहमु°; CR क्रिग्रहमु°.

७. CR adds [ द्वितीयेऽध्याये ].

# एकादशिनी

एकादशिन्यां प्रतिपशु यूपाँश्छिन्दन्ति[1] ॥ १ ॥ उपशयं द्वादशं पात्नीवतं त्रयोदशम् ॥ २ ॥ एका यूपाहुतिः ॥ ३ ॥ पृथगाव्रश्चनीयाः[2] ॥ ४ ॥ जोषणेन समेत्य पर्यञ्जनेन समीयात् ॥ ५ ॥ एवँ समानजातीयेन सर्वाननुक्रामति पशूँश्च ॥ ६ ॥ अग्नीषोमीयकाले यूपानुच्छ्रयति । अपि वाग्निष्ठँ श्वो भूत इतरान् ॥ ७ ॥ अग्रेणाहवनीयं परिलिखति ॥ ८ ॥ दक्षिणमग्निष्ठात् परिलिख्योत्तरं परिलिखति ॥ ९ ॥ एतेन धर्मेण व्यत्यासम् ॥ १० ॥ उदगपवर्गा यूपा दक्षिणापवर्गाः पशवः ॥ ११ ॥ स्फ्येन परिलिखति ॥ १२ ॥ रथाक्षमात्राणि[3] यूपान्तरालानि[3] ॥ १३ ॥ तिरश्चान्तँ संमिनोति ॥ १४ ॥ एवँ संमिता भवन्ति ॥ १५ ॥ अञ्जनादि परिव्ययणान्तमग्निष्ठान्तँ संमिनोति ॥ १६ ॥ यदि श्वो भूते समानम् ॥ १७ ॥ अथ चेत् पूर्वेद्युरञ्जनेन समेत्योच्छ्रयणेन समीयात् ॥ १८ ॥ समस्याग्निष्ठस्य रशने परिव्ययति । इतरेषां च द्वे द्वे समस्याग्निष्ठे[4] परिव्ययति ॥ १९ ॥ अपि वा तान् परिव्ययत्यग्निष्ठवर्जम्[4] ॥ २० ॥ "यं कामयेत पितृलोकं ऋध्नुयात्" (मै. सं. ४.७.९) इति ब्राह्मणव्याख्यातम् ॥ २१ ॥ दक्षिणस्मात्पक्षाद्दक्षिणतः प्राञ्चमुपशयं निदधाति ॥ २२ ॥ इदमहममुमामुष्यायणममुष्याः पुत्रमिन्द्रपाशेना-भिनँस्यामि इति यूपँ रशनयाभिनँस्यति ॥ २३ ॥ इदमहममुमामुष्या-

---

१. B, N °श्चिन्वंति.

२. Thus emended; B, N, CR पृथगास्वनीया.

३. B रथाक्षमात्राणि यूपांतराणी; N रथाक्षमात्राण्यंतराणी.

४–४. Thus emended; B, N, CR समासे समाग्निष्ठे परिव्वत्यभि वा ता वसत्यग्निष्ठवर्जम्.

यणममुष्याः पुत्रमिन्द्रवज्रेणाभिनिदधामि इति यूपाग्रँ स्वरुणाभिनिदधाति ॥ २४ ॥ तूष्णीमनभिचरतः ॥ २५ ॥ समान् मिनुयात्प्रतिष्ठाकामस्य ॥ २६ ॥ त्रीन् मध्यतः समान् पशुकामस्य ॥ २७ ॥ व्यतिषजेदितरान् ॥ २८ ॥ अग्निष्ठँ वर्षिष्ठमिन्द्रियकामस्य । ह्रसीयाँसौ[1] संमिनोति ॥ २९ ॥ यौ ताभ्यामनन्तरौ तावग्निष्ठस्य[2] समौ ॥ ३० ॥ आराग्रौ[3] संमिनोत्यग्निष्ठँ वर्षिष्ठँ ह्रसीयस इतरान्[4] ॥ ३१ ॥ यदि कामयेत विट् क्षत्रादोजीयसी स्यादबलीयः क्षत्रमिति ये दक्षिणतोऽग्निष्ठात्तान् वर्षीयसः कुर्यात् ॥ ३२ ॥ उन्नताँ संमिनोति ॥३३॥ आश्विनं गृहीत्वा यूपान्[5] संमिनोति । सह वाग्निष्ठेन[5] ॥ ३४ ॥ रशने द्वे द्वे समे । एकैकं परिवीय ॥ ३५ ॥ कृष्णशीर्षमाग्नेयमग्निष्ठे मेषीँ सारस्वतीमुत्तरस्मिन् सौम्यं बभ्रुं दक्षिणस्मिन् ॥३६॥ व्यतिषजेदितरान् ॥३७॥ श्यामः पौष्णः शितिपृष्ठो बार्हस्पत्यः पिशङ्गो वैश्वदेवो वृष्णिरैन्द्रः कल्माषो मारुतः सँहित ऐन्द्राग्नोऽधोरामः सावित्रः पेत्वो वारुणः ॥ ३८ ॥ वारुणं दक्षिणार्ध्यम् ॥३९॥ उपशयाय पशुं निर्दिशत्यारण्यम् ॥ ४० ॥ सृगलस्तेऽयं पशुः इति वा ॥ ४१ ॥ यं द्विष्यात्तं ब्रूयाद् असौ ते पशुः इति ॥४२॥ समवाये[6] द्वयोर्द्विवद् बहुषु बहुवत्[6] ॥ ४३ ॥ अमुम् इति यत्र स्यात्तत्र बहुत्वं निगमयेत् ॥ ४४ ॥ ये पश्वभिधायिनः शब्दाः पश्वङ्गानि[7] । अनु[7] पिता माता भ्राता सखा इति व्यूहति ॥४५॥

१. Thus emended; B, N, CR ग्रहशेषाँश्च.

२. B, N तामग्निष्टोमस्य.

३. B, N, CR एचन्तानात्.

४. CR reads sūtras 31–32 as a single sūtra.

५-५. Thus emended; B, N, CR यूपात्सनाद्यग्निष्ठदेवं दायं. CR reads sūtras 34–36 as a single sūtra.

६–६. Thus emended; B, N, CR षामत्राहे मित्राहे द्वयोर्द्विषड्बहुषु बहुवती.

७. B, N, CR पश्वङ्गान्युभिपता.

हविर्बर्हिर्वाञ्जनः प्राणश्चक्षुः श्रोत्रं त्वगसुरुन्मा इति ॥४६॥ औपाकरणौ[1] द्वौ दर्भावेका शाखा ॥ ४७ ॥ प्रतिपशु शस्त्रं वपाश्रपणी ॥ ४८ ॥ सर्वानन्वारभ्य शामित्रं नयन्ति ॥ ४९ ॥ प्रतिपश्वध्वर्यवोऽन्वारम्भणे[2] वपोद्धरणे वपाश्रपणे च ॥ ५० ॥ सकृदादित्योपस्थानं प्रव्रजनमन्त्रश्च[3] ॥५१॥ एकशृङ्ग्या[4] पाशाननुप्रहरति तृणाग्राणि वपाश्रपणीः स्वरूँश्च ॥ ५२ ॥ एकः पशुपुरोडाशः समानदेवतेषु । प्रतिपशु नानादेवतेषु ॥५३॥ अभ्यावर्तते[5] मनोता ॥ ५४ ॥ एकादश जुहूरुत्पाद्यावदाने-नानुक्रम्य चरणेनानुक्रामति ॥ ५५ ॥ यद्येका जुहूर्भवति प्रतिदेवतं पशुभिः प्रचरति ॥ ५६ ॥ एकस्मिन्नर्धर्चे याज्यायाः[6] सर्वेषाँ[6] वसाहोमं जुहोति ॥ ५७ ॥ समासिच्य दिग्घोमम् ॥ ५८ ॥ ततो वनिष्ठून्[7] । गुदानाम्[8] । जाघनीनाँ सर्वेषां प्रधानम् ॥ ५९ ॥ अनुबन्ध्याया हुतायाँ वपायामग्रेण शालामुखीयं प्राग्वँशे पात्नीवतँ संमिनोति ॥ ६० ॥ पौर्णमासिकी[9] वेदिः ॥६१॥ पाशुकान्याज्यानि ॥ ६२ ॥ अघोनाभिमचषालम् ॥६३॥ अनवस्तीर्णो यूपावटः ॥६४॥ तस्मिन् साण्डं त्वाष्ट्रं पशुमुपाकरोति[10] ॥ ६५ ॥ आवाहनवेलायाँ[11]

---

१. N यौपा°; CR अपा°.

२. CR °न्वारम्भेण. CR reads sūtras 49–51 as a single sūtra.

३. B, N प्रवृषण°.

४. Thus emended; B, N, CR एकव्यं

५. Thus N; cf. ĀpŚS XIV. 7.6; CR आवर्तते.

६. Thus emended; B, N याप्राया; CR सर्वेषां याज्याया.

७. Thus emended; B, N वनिष्ट त्या; CR वनेष्ट्वा.

८. B, N, CR गुदादीनां.

९. B, N सपौर्ण°.

१०. Thus emended; B, N शाकल्मुपा°; CR सकल्मुपा°.

११. Thus emended; B, N, CR आवेदन°; CR reads sūtras 66–67 as a single sūtra.

त्वष्टारँ वनस्पतिं चावाहयति ॥ ६६ ॥ पर्यग्निकृतमुत्सृज्य यावन्ति पशोरवदानानि तावत्कृत्व आज्यस्यावदाय[१] सम्प्रैषं[१] त्वष्टारँ वनस्पतिं च यजति ॥ ६७ ॥ अपि वा पर्यग्निकरणान्तं करोति ॥ ६८ ॥

॥ इति द्वादशाहे[२] एकादशिनीयं षष्ठं खण्डम् ॥

१. Thus emended; cf. MānŚS V. 2.12.41; ĀpŚS XIV. 7.15; B, N, CR °दायाप्रैषं.
२. CR adds [ द्वितीयेऽध्याये ].

# सौत्रामणिः

सौत्रामणिं सोमवामिनः सोमातिपवितस्य[1] राजसूयेनाभिषिषिचानस्य भूतिकामस्य ज्योगामयाविनोऽन्नाद्यकामस्य पशुकामस्य भ्रातृव्यवतो[2]ऽभिशस्यमानस्य वा ॥ १ ॥ सीसेन क्लीबाच्छष्पाणि कृष्णेन तसरपक्ष्मणा[3] सोमविक्रयिणो[4] वा क्रीणाति[5] ॥ २ ॥ गार्हपत्य ओदनं श्रपयित्वा लाजान् संसृज्य[6] तोक्मं[6] नग्नहुर्लाजा मासरमिति ॥ ३ ॥ स्वाद्वीं त्वा स्वादुना इति शष्पैः सुरां संसृजति ॥ ४ ॥ सोमोऽस्यश्विभ्यां पच्यस्व इति कुम्भ्यां[7] समवदधाति ॥ ५ ॥ तिस्रो रात्रीः संहिता वसति ॥६॥ तिसृणां[8] पारे पशुबन्धः ॥७॥ प्रणीतेऽग्नौ दक्षिणतोऽग्नेर्दक्षिणस्मिन् वेद्यंसे प्रणयति ॥ ८ ॥ अपि वा पर्यग्निकरणान्तं कृत्वा तदेवोल्मुकमुपसमादध्यात् ॥ ९ ॥ तस्य शेषं पशुश्रपणं हरेयुः ॥ १० ॥ सन्नेष्वाज्येषु सुरामभ्युदानयन्ति ॥ ११ ॥ ब्राह्मणस्य मूर्धन्[9] सादयित्वा[9] द्रोणे वालं वितत्य सुरामतिपावयति पुनातु ते परिस्रुतम् इति ॥ १२ ॥ प्रत्यङ् सोमः इति सोमातिपवितस्य ॥ १३ ॥ अग्रेण दक्षिणाग्निं सिकतानां खरः ॥ १४ ॥ तस्मिन् पालाशमाश्वत्थोदुम्बरं[10] नैयग्रोधमिति पात्राणि ॥ १५ ॥ तेषु कुविदङ्ग इति सुराग्रहान्

१. Thus emended; B, N, CR सोमाभिव्यजनस्य.
२. B, N भ्रातृव्यवधोतो.
३. B, N रथपक्षला.
४. B, N सोमविक्रिणा.
५. CR added by conjecture.
६. N सृज्यानोरुक्म; CR संसृज्या तोक्मं.
७. Thus emended; B, N, CR ककुभ्यां.
८. B, N स्तृणां.
९. B, N मूर्ध्न छाद°.
१०. B °माश्वत्थोंदुवरो; N °माश्वत्थादुंबरो; CR °माश्वत्थमौदुम्बरं.

गृह्णाति उपयामगृहीतोऽस्यच्छिद्रां त्वाच्छिद्रेण इति[1] ॥ १६ ॥ आश्विनं गृहीत्वा कुवलसक्तुभिः श्रीणाति[2] ॥ १७ ॥ सिँहावध्वर्युर्ध्यायति ॥ १८ ॥ सारस्वतं द्वितीयं प्रतिप्रस्थाता ॥ १९ ॥ कर्कन्धुसक्तुभिर्व्याघ्रलोमैश्च श्रीणाति ॥ २० ॥ व्याघ्रौ प्रतिप्रस्थाता ध्यायति ॥ २१ ॥ इन्द्राय सुत्राम्णे तृतीयँ यजमानः ॥ २२ ॥ बदरसक्तुभिः[3] श्रीणाति ॥ २३ ॥ वृकौ यजमानो ध्यायति[3] ॥ २४ ॥ एष ते योनिरमुष्मै त्वा इत्यायतने यथास्थानँ सादयति ॥ २५ ॥ यूपँ संमीय पशूनुपाकरोत्याश्विनमजँ सारस्वतीं मेषीमैन्द्रँ वृषभँ वृष्णिँ वा[4] ॥ २६ ॥ बार्हस्पत्यं चतुर्थँ सोमातिपवितस्य ॥ २७ ॥ इन्द्राय सुत्राम्ण एकादशकपालः सवित्रेऽष्टाकपालो वारुणो यवमयश्चरुरिति[5] पशुपुरोडाशान्निरुप्य ग्रहैः प्रचरति ॥२८॥ आश्विनमध्वर्युरादत्ते सारस्वतं प्रतिप्रस्थातैन्द्रँ यजमानः ॥२९॥ अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे सोमानामनुब्रूहि ॥ अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे सोमान् प्रस्थितान् प्रेष्य इति संप्रेष्यति ॥३०॥ वषट्कृतानुवषट्कृते हुत्वाश्विनस्य[6] सारस्वतेऽवनयति[7] सारस्वतस्यैन्द्र

१. CR reads sūtras 16–17 as a single sūtra.
२. B, N स्तृणाति
३–३. CR added by conjecture; B, N वाचयति.
४. CR added by conjecture.
५. B, N यवमयश्चरुरैंद्र एकादशकपाल इति.
६. The portion beginning here and ending with sūtra 52 in the 8th khaṇḍa is printed in CR in a distorted order. This order resulted from the fact that most of the Sautrāmaṇi portion of the MS No. 11234 ( Oriental Institute, Baroda ) which is the base of CR was copied from the original manuscript with the relevant folia lying in a wrong order. For a detailed study see C. G. Kashikar, "The Revised Sautrāmaṇi text of the Vārāha Śrautasūtra" *Journal of the Asiatic Society of Bombay* Vol XXVI No. 1 pp. 10-20, Bombay 1950. The correct order of the entire Sautrāmaṇi text as presented here is found in B, N.
७. CR सारस्वतेन यजति.

ऐन्द्रस्याश्विने ॥ ३१ ॥ समवनीय होताध्वर्यु: परिक्रीतौ यदत्र शिष्टम् इति भक्षयतः ॥ ३२ ॥ यदि न भक्षयेतां द्वे स्रुती इति वल्मीकवपायामवनयेदग्नौ विक्षारयेत ब्राह्मणो वा प्राश्नीयाद्यजमानो[1] वा स्वयं भक्षयेत् ॥ ३३ ॥ ये[1] भक्षयन्तः इति तिसृभिस्तिस्र आहुतीर्जुहोति ॥ ३४ ॥ कुम्भी[6] शतातृण्णामध्यधि दक्षिणमग्निं कृत्वा तस्यां सुरां[2] विक्षारयति वालमन्तर्धाय[3] त्वं सोम प्रचिकितः इति द्वादश ॥ ३५ ॥ तासां तिसृभिस्तिसृभिरेकैकोऽनुमन्त्रयते पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा पश्चाद्धोतोत्तरत आग्नीध्रः ॥ ३६ ॥ पितरो मदन्तां सोमप्रतीका व्यशेम देवहितं यदायुरिन्द्रपीतो विचक्षणो व्यशेम देवहितं यदायुः इति सर्वे स्रवन्तीमनुमन्त्रयन्ते ॥ ३७ ॥ ऐन्द्रस्यावदानैः प्रथमं प्रचरति जघन्यमाश्विनस्य ॥ ३८ ॥ पशुभिः प्रचर्य पशुपुरोडाशैः प्रचरति ॥ ३९ ॥ सहस्विष्टकृदिडं पशूनां पशुपुरोडाशानां च ॥ ४० ॥ ऋषभो दक्षिणा सृत्वरी च वडवा ॥ ४१ ॥ सँस्थिते मासरैः[4] शूलैश्चावभृथँ यन्ति[4] यथा वरुणप्रघासेषु ॥ ४२ ॥ मासराणि पुरोडाशस्थाने ॥ ४३ ॥ चरुणा[5] प्रचर्य हृदयशूलानुपचरन्ति[5] ॥ ४४ ॥

॥ इति द्वादशाहे[6] सौत्रामण्याँ सप्तमं खण्डम् ॥

कौकिल्यां ते कामा ये पूर्वस्यामन्ये च । तेजस्कामस्य वीर्यकामस्य बलकामस्य नर्याणि त्रीणि ॥ १ ॥ तेन धर्मेण सुरां सँस्करोति ॥२॥ सँस्कृतामन्वहं परीतो षिञ्चता सुतम् इति पयसा परिषिञ्चत्येकस्या

---

१-१. B, N प्राश्नीयाद्यक्षमा गो ( N°मा ग ) वा शंक्यत्यश्चेद्.

२. B, N स्रुचाँ.

३. Thus emended; B, N मंतर्धाय; CR [ हिरण्य ] मन्तर्धाय.

४-४. B, N मावेरे स्थलैः स्वाव?.

५-५. B, N चरुषे प्ररुषे प्रचर्यंतीरहृदयशूलानुपचर्यंति.

६. CR adds द्वितीयेऽध्याये.

दुग्धेन प्रथमायाँ व्युष्टायां[1] द्वयोर्द्वितीयस्याम् ॥ ३ ॥ अदित्यै[1] घृते चरुरैन्द्रश्च ऋषभः[2] ॥ ४ ॥ व्युदानयन्ति ॥ ५ ॥ न मूर्धनि सादयति ॥ ६ ॥ तेन धर्मेण सुरामतिपाव्य ब्रह्म क्षत्रम् इत्यूर्णासूत्रेण पयोऽतिपावयति ॥ ७ ॥ आश्वत्थे[3] द्वे द्वे वायव्ये ॥ ८ ॥ तेषु कुविदङ्ग इति पयोग्रहान् गृह्णाति उपयामगृहीतोऽस्यच्छिद्रां त्वाच्छिद्रेण इति यथादेवतम् ॥ ९ ॥ व्रीहिसक्तुभिराश्विनँ श्रीणाति यवसक्तुभिः सारस्वतं गोधूमसक्तुभिरैन्द्रँ श्यामाकसक्तुभिरुपवाकसक्तुभिरितरान् ॥ १० ॥ श्येनपत्रेण परिमार्जनम् ॥ ११ ॥ एष ते योनिस्तेजसे त्वा इति प्रथमँ सादयति वीर्याय त्वा इति द्वितीयं बलाय त्वा इति तृतीयम् ॥ १२ ॥ नाना हि वाम् इति सुराग्रहान् गृह्णाति । उपयामगृहीतोऽस्याश्विनं तेजः इति प्रथमँ सारस्वतँ वीर्यम् इति द्वितीयम् ऐन्द्रं बलम् इति तृतीयम् ॥ १३ ॥ एष ते योनिर्मोदाय त्वा इति प्रथमँ सादयति आनन्दाय त्वा इति द्वितीयं महसे त्वा इति तृतीयम् ॥ १४ ॥ सोमो राजा इत्यनुवाकेन ग्रहानुपतिष्ठते ॥ १५ ॥ ते पशवो बार्हस्पत्यवर्जम् ॥ १६ ॥ धूम्र[4] आश्विनोऽजः[4] ॥ १७ ॥ ते पशुपुरोडाशाः ॥ १८ ॥ ते ग्रहैः प्रचरन्ति द्वाभ्यां द्वाभ्यामेकैकः ॥ १९ ॥ समानः संप्रैषः ॥ २० ॥ सुरावन्तम् इत्युत्तरस्मिन्नग्नौ पयोग्रहाञ्जुहोति ॥ २१ ॥ यस्ते रसः इति दक्षिणस्मिन् सुराग्रहान् ॥ २२ ॥ समवनीयाध्वर्युः प्रतिप्रस्थाताग्नीध्र इत्याश्विनं भक्षयन्ति ब्रह्मा होता मैत्रावरुण इति सारस्वतमैन्द्रँ यजमानः ॥ २३ ॥ यमश्विना नमुचेः इति पयोग्रहान् भक्षयन्ति ॥ २४ ॥ यदत्र शिष्टम्

---

१–१. B, N शूलायामदित्यै.

२. Thus emended; B, N. प्रथम, CR प्रयमँ. CR reads sutras 4–5 as a single sūtra.

३. Thus emended; B तयावस्ये; N तथावक्षे; CR तयावेक्षेत which is read as a separate sūtra.

४–४. Thus emended; cf. ĀpŚS XIX. 2.1; B, N, CR त्वम्रस्याश्विनोऽजः

इति सुराग्रहान् समवनीय दक्षिणस्मादग्नेर्दक्षिणा त्रीनङ्गारानुदुह्य स्रुचर्याभिजुहोति पितृभ्यः स्वधायिभ्यः स्वधा नमः ॥ पितामहेभ्यः स्वधायिभ्यः स्वधा नमः ॥ प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः इति ॥२५॥ अक्षन् पितरः ॥ अमीमदन्त पितरः ॥ पितरः शुन्धध्वम् इत्यपो निनयति ॥ २६ ॥ तेन घर्मेण सुराँ विक्षारयति वालमन्तर्धायोर्णास्त्रैँ वा[1] त्वँ सोम प्रचिकितः इति द्वादश पुनन्तु मा पितरः इति द्वादश चतस्रोऽन्या[2] अन्तः श्रोण्यँसौ[2] व्यत्यासम् ॥ २७ ॥ ऋत्विजः[3] सर्वे स्रवन्तीमनुमन्त्रयन्ते ॥ २८ ॥ ऐन्द्रस्यावदानैः प्रथमं प्रचरति जघन्यमाश्विनस्य ॥ २९ ॥ पशुपुरोडाशैः प्रचर्य पशुभिः प्रचरति ॥ ३० ॥ पुरस्तात्स्विष्टकृतो रसं जुहोति द्वात्रिँशता शृङ्गशफैः सीसेन तन्त्रम् इति षोडश ॥ ३१ ॥ द्वयोर्द्विग्राहमेकैकँ वा जुहोति ॥ ३२ ॥ हुत्वा पात्र्याँ संपातमवनयति ॥ ३३ ॥ अभिषेकाय[4] गृह्णाति[4] पशूनां च वसया[5] ॥३४॥ क्षत्रस्य योनिरसि इति कृत्यधीवासमासन्द्यामास्तीर्य[6] दक्षिणत आहवनीयस्य निदधाति स्योनासि सुषदा इति ॥ ३५ ॥ सुषदामासीद इत्यारोहन्तमनुमन्त्रयते ॥३६॥ निषसाद धृतव्रतः इत्यारूढाय[7] व्याघ्रचर्म[8] विवेष्टयति[8] ॥ ३७ ॥ अभिषिच्यमाने[9] साम

---

१. CR added by conjecture.

२-२. Thus emended; B, N चतस्रोऽन्यासांतश्रोण्यांसौं ( N श्रोसौं ).

३. CR joins sūtra 28 to the preceding sūtra.

४. Thus emended; B, N अभिषेकाभिग्रहणाभि; CR अभिषेकाभिग्रहणादि.

५. CR reads sūtras 34–35 as a single sūtra.

६. Thus emended; B, N, CR सार्येणाधिमास्तमासन्दीमास्तीर्य ( N °माया संसंदामास्तीर्यं ).

७. Thus emended; B, N इति रुढाया; CR इति रुढाय.

८. Thus emended; B, N, CR व्याघ्रविष्टदिवेति ( N दिवोति ) च.

९. B, N, CR °मानँ. CR reads sūtras 37–39 as a single sūtra.

गायत्यैन्द्र्यां बृहत्याम् ॥ ३८ ॥ सँश्रवसे विश्रवसे सत्यश्रवसे श्रवसे इति निधनमुपयन्ति ॥ ३९ ॥ साम गायति द्विर्वा स्वाहाकरोति ॥ ४० ॥ देवस्य त्वा इत्यभिषेकमादाय त्रया देवाः इति यजमानमीक्षमाणो जुहोति ॥ ४१ ॥ प्रथमास्त्वा द्वितीयैः इत्यभिषिञ्चति ॥ ४२ ॥ भूः स्वाहा इत्याहवनीय आहुतिं जुहोति यथा राजसूये ॥ ४३ ॥ शिरो मे श्रीः इति यथारूपं गात्राणि संमृशति ॥४४॥ लोमानि प्रयतिः इति पूर्णाहुतिं जुहोति ॥ ४५ ॥ जङ्घाभ्यां पद्भ्याम् इत्यवरोहति ॥४६॥ द्वात्रिँशतं गा ददाति वडवां[1] च सकिशोराम्[1] ॥ ४७ ॥ यद्देवा देवहेडनम् इति तिसृभिरवभृथमेष्यन्नाहुतिं जुहोति ॥ ४८ ॥ धाम्नो धाम्नः ॥ यद् ग्रामे इति मार्जयते ॥ ४९ ॥ पवित्रमसि इत्यवभृथे स्नात्वा उद्वयं तमसस्परि इत्यादित्यमुपस्थाय अपो अद्यान्वचारिषम् इति समिधमाहरन्ति ॥५०॥ एधोऽस्येधिषीमहि इति समिदाधानः ॥ ५१ ॥ समावृतद् इति पूर्णाहुतिं जुहोति ॥ ५२ ॥

यदापिपेष मातरं पुत्रः प्रमुदितो धयन् ।
एतत्ते अग्ने अनृणो भवाम्यहतौ पितरौ मया ॥
अनृणो देवानामनृणः पितॄणां मनुष्याणामनृणो भवामि ।
यदक्षवृत्तमनृतँ[2] संकरादीष्ट[2] सर्वस्मादनृणो भवामि ॥

इति हुत्वेष्टिं निर्वपति ॥ ५३ ॥ अदित्यै घृते चरुः ॥ ५४ ॥ सँस्थितायामिन्द्राय वयोधसे[3] पशुबन्धः ॥ ५५ ॥ पशुर्दक्षिणा पशुबन्धयोः ॥ ५६ ॥ आदित्ययोर्वत्सं[3] पूर्वस्यां ददाति मातरमुत्तरस्याम् ॥५७॥ प्रथमोऽनुवाकः प्रथमस्य पशुबन्धस्याप्रीः ॥ ५८ ॥ आ चर्षणिप्राः इति षडर्चँ याज्यानुवाक्याः ॥ ५९ ॥ द्वितीयोऽनुवाकः प्रयाजप्रैषाः

१–१. Thus emended; B, N, CR वडवाँश्च सकिशोरान् cf. MānŚS V 2.11; ŚBr XII 7.3.21.

२. Thus B, N; CR यदक्षवृत्तँ संकरादष्ट.

३–३. Thus emended; N वयोवशे पशुबंधः पशुर्वंदो दक्षिणा पशुबन्धोरदित्ययाँ; B, CR वयोधसे पशुर्ऋषभो दक्षिणा धेनुरदित्या वत्सं.

॥ ६० ॥ तृतीय आप्रीः ॥ ६१ ॥ चतुर्थस्य तिस्रो वपायास्तिस्रः पशुपुरोडाशानाम् ॥ ६२ ॥ तासु प्रथमामनूच्य मध्यमया यजेन्मध्यमामनूच्योत्तमया यजेदुत्तमामनूच्य प्रथमया यजेदिति व्यतिषजेत् ॥ ६३ ॥ अवदानेषु सप्तमीं[1] ग्रहाणामनुवाक्योत्तरः[2] प्रैष[2] उत्तरा याज्योत्तरास्तिस्रोऽवदानानामुत्तमे[3] स्विष्टकृतः ॥ ६४ ॥ पञ्चमोऽनुयाजप्रैषाः ॥ ६५ ॥ वायोधसस्य नित्यान्[4] प्रैषानधीयीत[4] ॥ ६६ ॥ तस्योत्तमस्त्वाप्रीरुत्तमो याज्यानुवाक्या उत्तमो याज्यानुवाक्याः ॥ ६७ ॥

॥ इति द्वादशाहेऽष्टमं[5] खण्डम् ॥ समाप्तं द्वादशाहम् ॥

॥ इति द्वितीयोऽध्यायः[6] ॥

१. Thus N; CR सप्तमः; CR breaks the sūtra here.
२. N °त्तरप्रैष; CR °मनुवाक्या उत्तरः प्रैषा. CR reads sūtras 64–66 as a single sūtra.
३. Thus N; CR °मुत्तमः
४. By conjecture; N वायोसध्वस्यकवाद्वायोवसा प्रैषानधीयीत; B, CR वायोधसरय कत्ताद्वायो वसा प्रैषानधीमहि.
५. CR द्वादशाहे [ द्वितीयेऽध्याये ] ऽष्टमं.
६. B, N add समाप्तः

# राजसूयः

राज्ञो राजसूयः ॥ १ ॥ अग्निष्टोमेनेष्ट्वा चैत्र्यां पौर्णमास्याँ सप्तरात्रस्य पुरस्तादिष्टिं निर्वपति ॥ २ ॥ अनुमत्या अष्टाकपालं निर्वपति ॥ ३ ॥ ये प्रत्यञ्चः शम्यामतिशीयन्ते तं नैर्ऋतमेककपालम् ॥ ४ ॥ उभौ सह शृतौ कुर्वन्ति ॥५॥ नैर्ऋतेन पूर्वेण प्रचरन्ति ॥६॥ वीहि स्वाहाहुतिं[1] जुषाणः इति गार्हपत्ये हुत्वा दक्षिणा परेत्य स्वकृत इरिण एकोल्मुकं निधाय विस्रँसिकायाः काण्डाभ्यां नैर्ऋतं जुहोत्यङ्गुष्ठाभ्याँ वा जुषाणा निर्ऋतिर्वेतु स्वाहा इति ॥ ७ ॥ वासः कृष्णं भिन्नान्तं दक्षिणा ॥ ८ ॥ स्वाहा नमो य इदं चकार इति गार्हपत्ये हुत्वानुमतेन प्रचरन्ति ॥ ९ ॥ धेनुर्दक्षिणा ॥ १० ॥ अथ य उदञ्चः शम्यामतिशीयन्ते तानुदङ् परेत्य वल्मीकवपामुद्रुज्य शुक्त्याभिजुहोति इदमहममुष्यामुष्यायणस्य क्षेत्रियमवयजे इति ॥ ११ ॥ तेनैव लोष्टेनापिदधाति इदमहममुष्यामुष्यायणस्य क्षेत्रियमपिदधामि इति ॥ १२ ॥ "श्वो भूत आदित्येभ्यो भुवद्वद्भ्यः" (मै. सं. ४.३.१) इति घृते चरुः ॥ १३ ॥ पञ्चाग्रायणे[2] षष्ठ्यै[2] सरस्वत्यै चरुः सरस्वते द्वादशकपाल इति[3] ॥ १४ ॥ मिथुनौ गावौ दक्षिणा ॥ १५ ॥ सँवत्सरं चातुर्मास्यैर्यथाविहितमिष्ट्वेन्द्रतुरीयेण यजेत ॥ १६ ॥ सायं पञ्चेध्मीयेन ॥१७॥ अपां न्ययनादपामार्गानाहरन्ति ॥ १८ ॥ तान्त्सक्तून् कृत्वा दक्षिणा परेत्य स्वकृत इरिण एकोल्मुकं निधाय पर्णमयेन स्रुवेण जुहोति देवस्य त्वा इति ॥ १९ ॥ हतं रक्षोऽवधिष्म रक्षः इति हुत्वानुनिगदति

१. B, N स्वाहे.
२. Thus emended; B, N पंचाग्रहण्णः षष्ठ्यै; CR पञ्चग्रयणषष्ठ्यै.
३. CR reads sutras 14–15 as a single sutra.

॥ २० ॥ वासो दक्षिणा ॥ २१ ॥ आहवनीयं चतुर्धा प्रतिदिशँ व्यूहति मध्ये पञ्चमम् ॥ २२ ॥ ये देवाः पुरःसदः इति पर्यायैः प्रतिदिशं जुहोति मध्ये पञ्चमेन ॥ २३ ॥ इदमहँ रक्षोऽभिसमूहामि इति समुह्य अग्नये पुरःसदे स्वाहा इति पर्यायैः प्रतिदिशं[१] जुहोति मध्ये च ॥२४॥ रथः पञ्चवाही दक्षिणा ॥ २५ ॥ आभिरिष्टिभिर्यजतेऽनुमत्यै चरुरिति पञ्च देविकाहवीँषि ॥२६॥ मध्ये चरुं[३] धात्रे निर्वपत्यन्ते वा ॥२७॥ "पशुकामँ याजयेत्" (मै. सं. ४.३.५) इति ब्राह्मणव्याख्यातम् ॥ २८ ॥ अन्तराणि त्रीणि सह हवीँषि पूर्वं त्रिषँयुक्तम् ॥ २९ ॥ अन्तराणि त्रीणि द्वितीयम् ॥ ३० ॥ अग्नीषोमीय एकादशकपाल ऐन्द्राग्न[४] एकादशकपालः[४] सौम्यश्चरुर्बभ्रुर्दक्षिणेति[५] तृतीयम् ॥ ३१ ॥ तैरिष्ट्वाग्नये वैश्वानराय द्वादशकपालो वारुणश्च यवमयश्चरुः प्रादेशमात्रः ॥ ३२ ॥ हिरण्यमश्वश्च दक्षिणा[५] ॥ ३३ ॥ यो ज्योगामयावी व्यृध्येत[६] ॥ ३४ ॥ "बार्हस्पत्यश्चरुर्ब्रह्मणो गृहे" (मै. सं. २.६.५) इत्येकादश रत्निहवीँषि ॥ ३५ ॥ महिष्या गृहे प्रचर्य भगाय[८] चरुर्वावातायै[८] गृहे ॥ ३६ ॥ विचित्तगर्भा पष्ठौही दक्षिणा ॥३७॥ नैर्ऋतश्चरुर्नखावपूतानां[९] परिवृक्त्या[९] गृहे ॥ ३८ ॥ अङ्गुष्ठपर्वमात्रँ श्रपयित्वा

१. Thus N; CR omit.
२. Thus N; CR प्रदक्षिणं.
३. B, N चरुणा.
४. N ऐन्द्राग्नीय एकादशकपालः, CR [ इन्द्रासोमीय एकादशकपालः ]
५. B, N दक्षिणतो.
६. Thus emended; B, N, CR बध्येत.
७. B, N इत्येकाद्वादश.
८. Thus emended; cf. ApŚS XVIII.10.14; B, N, CR भागश्चरुर्वैसिन्या. CR reads sūtras 36–37 as a single sūtra.
९. Thus emended; cf. MS II. 6.5; B, N, CR °र्निर्विष्टतानां त्वार्याया परिवंग्यताया.

स्वकृत इरिणे प्रदरे वा जुहोति ॥ ३९ ॥ भागधातिकं भागदुघमित्याचक्षते[1]। तस्य गृहे प्रचर्य अध्वने स्वाहा इति पालाकलस्य[2] गृहे जुहोति ॥ ४० ॥ यथासमाम्नातमितरैर्नाममन्त्रैः प्रचरति[3] ॥ ४१ ॥ "इन्द्रायाँहोमुचे" (मै. सं. २.६.६) इति द्विहविषे[4] ॥ ४२ ॥ मैत्राबार्हस्पत्यमभिषेचनीयस्य दीक्षणीया[5] ॥ ४३ ॥ स्वयँरुग्णाया अश्वत्थशाखायाः पात्रं भवति ॥ ४४ ॥ तस्मिन् श्वेतायाः श्वेतवत्साया दुग्धं भवति ॥ ४५ ॥ तत्स्वयं मूर्छति ॥ ४६ ॥ स्वयं मथ्यते ॥४७॥ स्वयँ विलीनमाज्यं भवति ॥४८॥ अर्धँ वेद्याः कुर्वन्त्यर्धँ स्वयंकृतम् ॥ ४९ ॥ अर्धं बर्हिषो दात्यर्धँ स्वयंदिनम् ॥ ५० ॥ अर्धमिध्मस्य छिनत्त्यर्धँ स्वयमावपनम् ॥ ५१ ॥ मित्राय जुष्टं, बृहस्पतये जुष्टम् इति निर्वपन्ति ॥ ५२ ॥ ये क्षोदिष्ठास्तण्डुलास्तं बार्हस्पत्यं चरुँ शृतं कुर्वन्ति ॥ ५३ ॥ तत्र तत्पात्रमपिधायाज्यमासिच्य ये स्थविष्ठास्तण्डुलास्तानावपन्ति ॥ ५४ ॥ उभौ सह शृतौ कुर्वन्ति ॥ ५५ ॥ तावुत्तराधरौ[6] अपयन्ति ॥ ५६ ॥ मैत्रेण पूर्वेण प्रचरन्ति ॥ ५७ ॥ अश्वो मैत्रस्य दक्षिणा शितिपृष्ठो बार्हस्पत्यस्य सा वा श्वेता श्वेतवत्सा ॥ ५८ ॥ यस्य राष्ट्रँ शिथिरमिव स्यात्तमेतेन याजयेन्मैत्राबार्हस्पत्येन ॥ ५९ ॥ पयसि वा सह मैत्रावरुणीमामिक्षाँ सँस्कुर्वन्ति ॥ ६० ॥ सारस्वत्यो वसतीवर्यो भार्गवो होता दशपेये[7] ॥६१॥ अग्नीषोमीयस्य पशुपुरोडाशमनु "अग्नये गृहपतये" (मै. सं. २.६.६) इत्यष्टौ

१. B, N भाग दुग्पत्तिमि°.

२. Thus emended; cf. ĀpŚS XVIII. 10.25; B, N, CR छाणुक्षतेस्य.

३. B, N प्रचर्यचरति.

४. Thus emended; B, N, CR द्विविषे.

५. B, N °णीयाः

६. Thus emended; cf. ĀpŚS XVIII. 11.19.

७. B, N दशायेयेर्वा.

देवस्वो हवीँषि निर्वपति सर्वपृष्ठां[1] च ॥ ६२ ॥ "अग्नये गायत्राय" (मै. सं. २·१५·१०) इति दशहविषम् ॥ ६३ ॥

॥ इति राजसूये तृतीयेऽध्याये[2] प्रथमं खण्डम् ॥

पुरस्तात् स्विष्टकृतः सविता त्वा प्रसवानाम् इति हस्तमन्वारभ्य जपति अमुष्याः पुत्रम् इति यस्याः पुत्रो भवति । अमुष्यां विशि इति यस्या विशो राजा भवति ॥ १ ॥ अत्रैवावेदनमनुक्रमणमनुमन्त्रणमित्यधीयते[3] ॥ २ ॥ उक्थ्योऽभिषेचनीयसँस्था ॥ ३ ॥ माध्यंदिनीयान् सवनीयाननु मारुतमेकविँशतिकपालं निर्वपति ॥ ४ ॥ शुक्रज्योतिश्च इति पर्यायैः कपालान्युपदधाति ॥ ५ ॥ द्वात्रिँशतँ सहस्राणि चतुस्त्रिँशतमयुतँ[4] वा ददाति ॥ ६ ॥ माहेन्द्रकाल आग्नीध्रीये पवित्राणि गृह्णाति ॥ ७ ॥ देवीरापो अपां नपात् इत्यपोऽभिजुहोति ॥ ८ ॥ उत्तरोत्तरैः पर्यायैर्होमग्रहाणि सर्वत्र ॥ ९ ॥ वृषोर्मिरसि इति प्रतीपसारणीनाम् ॥ १० ॥ वृषसेनोऽसि इत्यन्वीपसारणीनाम् ॥ ११ ॥ अपां पतिरसि इति नदस्य ॥ १२ ॥ अप्रहावरीः स्थ इत्यनुपदासीनाँ स्थावराणाम् ॥ १३ ॥ परिवाहिणीः स्थ इति नीवाहस्य ॥ १४ ॥ ओजस्विनीः स्थ इत्यतीर्थे प्रवहन्तीनाम् ॥ १५ ॥ मान्दाः स्थ इति कूप्यानाम् ॥ १६ ॥ व्रजक्षितः स्थ इति स्थावराणाम् ॥ १७ ॥ सूर्यवर्चसः स्थ इति या आतपति वर्षति ॥ १८ ॥ सूर्यत्वचसः स्थ इति यासु परिदृश्यते[5] ॥ १९ ॥ मरुतामोजः स्थ इत्यपृष्ठे ॥२०॥ वशाः स्थ इति प्रुष्वाणाम्[6]

१. B, N सर्वपृष्ठया.

२. B, N omit.

३. Thus emended; B, N, CR अत्रैवावेदनुक्रमक्रमणमनुमंत्रातित्यधीयते.

४. B, N °शतसंपूर्तं.

५. B °वृश्यति; N °वृष्यति.

६. B, N, MS IV. 4.1; MānŚS IX. 1.2.36 पुष्पाणाम्.

॥ २१ ॥ शक्वरीः स्थ इति गोमूत्रस्य ॥ २२ ॥ विश्वभृतः स्थ इति पयसः ॥ २३ ॥ जनभृतः इति घृतस्य ॥ २४ ॥ अपामोषधीनां रसः[1] इति मधुनः ॥ २५ ॥ षोडश गृहीत्वा देवीरापो मधुमतीः इति सँसृजति ॥ २६ ॥ अनाधृष्टाः सीदत इत्यन्तरा होतुर्धिष्ण्यं ब्राह्मणाछँसिनश्च सादयति ॥ २७ ॥ अपो देवीः इत्यभिमन्त्र्य अनिभृष्टमसि इति शत-कृष्णलँ रुक्मँ शतातृण्णमादाय तेन सह शुक्रा वः शुक्रेण पुनामि इत्युत्पूय[2] देवो वः इत्यनुषजति पच्छो[2] गायत्र्या ॥ २८ ॥ रुक्मेणोत्पूय[3] पालाश-माश्वत्थमौदुम्बरं नैयग्रोधमिति पात्राणि तेषु राजसूयाः इत्यपो व्यानयति ॥ २९ ॥ रुद्र यत्ते इति शेषमाग्नीध्रीये हुत्वा सोमा इन्द्रः इति यज-मानमामन्त्रयते ॥ ३० ॥ क्षत्रस्य योनिरसि इति तार्प्यँ यजमानः परिधत्ते क्षत्रस्योल्वमसि इति क्षौमँ सँशुद्धं क्षत्रस्य नाभिरसि इत्युष्णीषम् ॥ ३१ ॥ मधुतोक्ममिश्रमाशयति[4] ॥ ३२ ॥ पञ्चाशता दक्षिणमक्ष्याङ्क्त[5] एकपञ्चाशता वामम् ॥ ३३ ॥ अभ्यक्तमुदकँ स्पर्शयति ॥ ३४ ॥ आवित्तो अग्निः इत्यावेदयति ॥ ३५ ॥ "अमुष्याः पुत्रः" (मै. सं. २.६.९) इति व्याख्यातम् ॥ ३६ ॥ एष ते जनते राजा इत्यनुदिशति जनतायै ॥ ३७ ॥ सोमोऽस्माकं ब्राह्मणानां राजा इत्युपांशु जपति ॥ ३८ ॥ इन्द्रस्य वज्रोऽसि इति यजमानाय धनुः प्रयच्छति ॥ ३९ ॥ शत्रुबाधनाः स्थ इति त्रीनिषुधीन्[6] बाणवतः ॥ ४० ॥ तान् पात प्राञ्चम् इत्यभिमन्त्र्य मित्रोऽसि इति दक्षिणं बाहुमुद्यछति वरुणोऽसि इति सव्यम्

१. Thus N; CR omit.

२–२. Thus emended; B, CR इति पूयोवावदितोनुषजत्यस्थो; N इति पयोयावदितोनुषजत्यस्थो. CR reads sūtras 28–29 as a single sūtra.

३. B, N रिरुणायूप.

४. B °मासादयति; N °माचादय.

५. B, N दक्षिणमिश्रकोक.

६. B, N त्रित्वशुमृवुसुवान्.

॥ ४१ ॥ हिरण्यवर्णमुषसः इत्युद्यतबाहुं तिष्ठन्तमभिमन्त्रयते ॥ ४२ ॥ सीमाप्रतिष्ठामन्वभिधावन्[1] दिश उपतिष्ठते समिधमातिष्ठ इति पर्यायैः ॥ ४३ ॥ सोमस्य त्विषिरसि इति व्याघ्रचर्म विवेष्टयासन्द्यामास्तृणाति ॥ ४४ ॥ प्रत्यस्तं नमुचेः शिरः इति बहिर्वेदि पादेन[2] सीसं पण्डगाय प्रत्यस्यति ॥ ४५ ॥ अवेष्टा दन्दशूकाः इति लोहितायसं केशवापाय ॥ ४६ ॥ मृत्योः पाहि इति राजतँ[3] रुक्ममधस्ताद् व्याघ्रचर्म व्यपोहति ॥ ४७ ॥ दिदिवः पाहि इति हरितँ रुक्ममुपरिष्टादध्यूहति[4] ॥ ४८ ॥ अग्नये स्वाहा इति पर्यायैर्द्वादश पार्थानि हुत्वा मारुतस्य दैवतेन प्रचरति ॥ ४९ ॥ सोमस्य त्वा द्युम्नेन इत्येनमासन्द्यामूर्ध्वबाहुं तिष्ठन्तमभिषिञ्चति पालाशेन ब्राह्मण आश्वत्थेन वैश्य औदुम्बरेण भ्रातृव्यो यो जन्यो मित्रँ स नैयग्रोधेन ॥ ५० ॥ रुक्मं प्रत्यञ्चं सिञ्चति ॥ ५१ ॥ पालाशे शेषान् समवनीय विषाणया[5] वासाँसि विस्रस्य इन्द्रस्य योनिरसि इति वास उपादत्ते ॥ ५२ ॥ समाववृत्रन् इति समुन्मार्ष्टि ॥ ५३ ॥ इन्द्रस्य वज्रोऽसि इति रथमुपावहरति ॥ ५४ ॥ मित्रावरुणयोस्त्वा इति युनक्ति ॥ ५५ ॥ विष्णोः क्रमोऽसि इति रथमाक्रमति[6] ॥ ५६ ॥ मरुतां प्रसवे जय इत्यारुह्य जपति ॥ ५७ ॥

॥ इति राजसूये तृतीयेऽध्याये[7] द्वितीयं खण्डम् ॥

---

१. Thus emended; B, N, CR समाप्रतिष्ठन्तमन्वभि (N °ष्ठंतन्वभि) धावन्.
२. Thus emended; B, N ग्राने; CR सते.
३. CR रजतँ.
४. B, N °दप्युपहाति.
५. CR कृष्णविषाणया.
६. B, N रथापक्रामति.
७. B, N omit.

असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच ।
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा नः स्तोममन्धसो मदेषु ॥

इति त्रिष्टुभा ब्रह्मान्वेति ॥ १ ॥ सृत्वा राजन्यं जिनाति ॥ २ ॥ तस्मै तामिषुमस्यति । तदस्यामोघायास्तमभूत् ॥ ३ ॥ आप्तं मनः इति वृत्तं परिगृह्यायाति[१] ॥ ४ ॥ एष वज्रः इति पत्न्यै धन्वार्त्नी[२] प्रयच्छति ॥ ५ ॥ उपादधाति[३] ॥ ६ ॥ इयदसि इति राजतं रुक्ममभिमृशति युङ्ङसि इति हरितम् ऊर्गसि इत्यौदुम्बरम् ॥ ७ ॥ मित्रोऽसि इति दक्षिणं बाहुमवहरति वरुणोऽसि इति सव्यम् ॥ ८ ॥ सदसि इति हस्तावामिक्षायाम् ॥ ९ ॥ पशूनां मन्युरसि तदेव मे मन्युर्भूयात् ॥ नमो मात्रे पृथिव्यै इति वाराही उपानहा अभ्यवरोहति ॥ १० ॥ प्रति त्यन्नाम राज्यमधायि इति मुखं[४] विमृष्टे[४] ॥ ११ ॥ कृत्यधीवासमासन्द्यामास्तीर्य[५] दक्षिणत आहवनीयस्य निदधाति स्योनासि सुषदा इति ॥ १२ ॥ विष्णोः क्रान्तमसि इत्यासन्द्यै क्रामति ॥ १३ ॥ स्योनामासीद सुषदामासीद इत्यारोहन्तमनुमन्त्रयते निषसाद धृतव्रतः इत्यारूढम् ॥ १४ ॥ अग्नये स्वाहा इति रथविमोचनीयं जुहोति ॥ १५ ॥ हंसः शुचिषद् इत्यादधाति ॥ १६ ॥ सह सारथिना रथमादधाति ॥ १७ ॥ आहितादवरोहति ॥ १८ ॥ ब्रह्मास्त्वं ब्रह्मासि इति यजमानोऽध्वर्युमामन्त्रयते ब्रह्माणं होतारमुद्गातारम् ॥ १९ ॥ सवितासि सत्यसवः इति पर्यायैः प्रत्याहुः ॥ २० ॥ एष वज्रः इति ब्रह्मा स्फ्यं राज्ञे प्रयच्छति । राजा प्रतिहिताय प्रतिहितः सेनान्ये सेनानी संग्रहीत्रे संग्रहीता सूताय सूतो

---

१. Thus emended; B, N, CR परिगृह्य याति.

२. B, N, CR धन्वार्त्नि.

३. Thus emended; B, N, CR उपदधाति.

४. Thus emended; B मृष्टं निम्रेष्टे; N मृष्टं निम्रिष्टे; CR निमृष्टे; cf. ĀpŚS XVIII. 12.9.

५. Thus emended; B, N, CR तणाधीतासमा (N समावा) संदीमास्थाय.

ग्रामण्ये ग्रामणीरक्षावापाय ॥ २१ ॥ तेन स्फ्येनाधिदेवनं कुर्वन्ति ॥ २२ ॥ तत्र पष्ठौहीँ विदीव्यन्ते ब्राह्मणो राजन्यो वैश्यः शूद्रः ॥ २३ ॥ ओदनँ राजा प्रतिश्रावयति ॥ २४ ॥ ब्राह्मणश्चतुःशतमक्षानपछिद्य वड्ढ्रिषँ राज्ञे इति राज्ञे प्रयच्छति ॥ २५ ॥ तद्राजा कृतँ विचिनोति ॥ २६ ॥ ततः पञ्चाक्षान् प्रयच्छन्नाह दिशो अभ्यभूदयम् इति ॥ २७ ॥ क्षेत्रं ददाति ॥ २८ ॥ वरँ वृणीते ॥ २९ ॥ मङ्गल्यनाम्नो ह्वयति सुश्लोका: सुमङ्गला: सत्यराजानः इति ॥ ३० ॥ ऋचो गाथाश्च होता शँसति हिरण्यकूर्चे आसीनः ॥३१॥ हिरण्यकूर्चे हिरण्यकशिपुनि वासीनोऽध्वर्युः प्रतिगृणाति । ओम् इत्यृक्षु तथा इति गाथासु ॥३२॥ परिधानीयाँ संपाद्य मैत्रावरुण्यामिक्षया प्रचरति ॥ ३३ ॥ सहस्विष्टकृदिडं मारुतस्य च ॥३४॥ अत्रैव रुक्मौ ददाति ॥३५॥ अभिषेकशेषं गार्हपत्ये जुहोति[1] ॥३६॥ प्रतिहितस्य वयँ स्याम पतयो रयीणाम् इति [ वाचयति ॥ ३७ ॥ माहेन्द्रेण चरित्वा[1] ] समानमावभृथात् ॥३८॥

॥ इति राजसूये तृतीयेऽध्याये[2] तृतीयं खण्डम् ॥

अपां नप्त्रे स्वाहा इत्यपामन्तेऽवभृथे जुहोति ऊर्जो नप्त्रे इति दर्भस्तम्बे वल्मीकवपायाँ वा अग्नये गृहपतये इति गार्हपत्ये ॥ १ ॥ ऐन्द्री सूतवशानुबन्ध्या ॥ २ ॥ नैवारः पशुपुरोडाशः ॥३॥ पात्रीस्थाने सूनाया[3] अधि[3] चतुष्पद्या निर्वपति ॥ ४ ॥ पश्चात्प्राग्वँशस्य विहारँ विहृत्य "सावित्रोऽष्टाकपालः" ( मै. सं. २.६.१३ ) इतिप्रभृतयः सप्त सँसृपः ॥ ५ ॥ ताभिरन्वहँ यजते ॥ ६ ॥ पूर्वस्याः पूर्वोऽपरस्या[4]

१-१. Thus emended; B, N, CR इति प्रतिहितस्य वयँ स्याम पतया रयीणामिति जपित्वा. cf. MānŚS IX. 1.4.29-5.1.

२. B, N omit.

३. B, N सूनाय अभि.

४. B, N यवापिरस्या.

गार्हपत्यः ॥ ७ ॥ प्राग्वँशे त्वाष्ट्रः[१] ॥ ८ ॥ तस्मिन् सँस्थिते दशपेयाय दीक्षते ॥ ९ ॥ न केशश्मश्रु वपति ॥ १० ॥ अप्सु दीक्षा ॥ ११ ॥ श्वेतान्[२] द्वादश पुण्डरीकाँश्च यजमानो बध्नीते ॥ १२ ॥ सद्यो वाचँ[३] विसृजति ॥१३॥ सद्यो राजानं क्रीणाति दशभिः साण्डैर्वत्सतरैर्नित्यैश्च ॥ १४ ॥ पुरस्तादुपसदामाग्नेयमष्टाकपालं निर्वपेन्मध्ये सौम्यमुपरिष्टाद्वैष्णवम् ॥ १५ ॥ अग्निष्टोमो दशपेयसँस्था ॥ १६ ॥ शतं ब्राह्मणाः सोमं पिबन्ति दश दशैकैकं चमसम् ॥१७॥ दश[४] पृछति कस्ते पितामहः कस्ते पितामहः इति स्त्रियश्च ॥ १८ ॥ येषां दशसु न मीमाँसेरँस्त ऋत्विजः प्रसर्पकाश्च[५] । अपि वा[५] " किं ब्राह्मणस्य " ( मै. सं. ४.८.१) इत्युक्त्वा प्रसर्पति ॥ १९ ॥ दक्षिणाकाले " रुक्मो होतुः स्रगुद्गातुः प्रावेपा अध्वर्योः " ( मै. सं. ४.४.८ ) इति ब्राह्मणव्याख्यातम् ॥२०॥ साण्डस्त्रिवत्सो ग्रावस्तुतो वत्सतर्युन्नेतुरजः सुब्रह्मण्यस्य ॥ २१ ॥ न प्रसर्पकेभ्यो[६] ददाति ॥ २२ ॥ श्रायन्तीयं ब्रह्मसाम ॥ २३ ॥ अभिषेचनीयदशपेयौ वत्सतरापवर्गौ ॥ २४ ॥ पूर्णमास्या यजनीयेऽहन्यभिषेचनीयाय दीक्षते ॥ २५ ॥ द्वादश मासान् दीक्षितो भवति ॥ २६ ॥ उपसत्सु नाश्नाति ॥ २७ ॥ तिस्र उपसदः ॥ २८ ॥ चतुर्थ्यां सौम्यमहः ॥ २९ ॥ तदहः सँसृपां प्रथमां दशम्यामुत्तमाम् ॥ ३० ॥ सा प्रथमा दशाहानि यस्योपसदः ॥ ३१ ॥ त्रयोदश्याँ सौम्यमहस्तदहर्दिशामवेष्टिभिः ॥ ३२ ॥ वैष्णवादुत्तराणि पञ्च हवीँषि ॥ ३३ ॥ तत्र ब्राह्मणो यजेत । बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिँ हुत्वाभिघारयेत्

१. B, N त्वष्ट्र.
२. B, N श्वेत.
३. Thus N; CR जातँ.
४. B, N दशान्.
५-५. Thus emended; B, N, CR यसर्पिणश्च पिवा.
६. B, N सर्पतोभ्यो.

॥ ३४ ॥ "अन्नकामो यजेत" ( मै. सं. ४.४.१० ) इति ब्राह्मणव्याख्यातम् ॥ ३५ ॥ सायं पूर्वाः प्रयुज उत्तराणि हवीँषि ॥ ३६ ॥ दक्षिणो रथवाहनवाहो दक्षिणा ॥ ३७ ॥ षडुत्तराणि प्रातः ॥ ३८ ॥ सव्यो रथवाहनवाहो दक्षिणा ॥ ३९ ॥ पौर्णमास्यामग्निहोत्रं जुहोति ॥ ४० ॥ सँवत्सरमग्निहोत्रँ हुत्वा केशवपनीयाय दीक्षते ॥ ४१ ॥ प्रतीचीनस्तोमोऽतिरात्रः षोडशिकः सँस्था ॥ ४२ ॥ अनुबन्ध्यायाँ हुतायामग्निचयवद्दक्षिणस्याँ वेदिश्रोण्यामासन्द्यामासीनस्य ये केशिनः प्रथमे सत्रमासत इति प्रवपति ॥ ४३ ॥ तस्मिन् सँस्थिते पशुबन्धेन यजते ॥ ४४ ॥ मारुती पृश्निः पष्ठौही गर्भिण्यादित्याजा मलिहा गर्भिणी ॥ ४५ ॥ "सवित्रे प्रसवित्रे" ( मै. सं. २.६.१२ ) इति सत्यदूतास्त्रीणि हवीँषि ॥ ४६ ॥ दण्ड उपानहौ शुष्कदृतिरिति दक्षिणा दूताय[1] प्रयच्छति ॥ ४७ ॥ पशुबन्धेन यो यजते योऽस्य प्रत्यन्तवासीयो[2] राजा तस्मै प्रहिणोति अभ्यषिक्षि राजाभूम् ॥ अस्म्यहमहम्[3] इति ॥ ४८ ॥ व्युष्टिद्विरात्रेण यजते ॥ ४९ ॥ अग्निष्टोमः प्रथममहरायुरतिरात्र उत्तरम् ॥ ५० ॥ क्षत्रस्य धृत्या[4] त्रिष्टोमेनाग्निष्टोमेनेष्टिभिर्यजेत[4] देविकाभिर्देवसूमिर्वैश्वानरवारुण्या सौत्रामण्या सौत्रामण्या ॥ ५१ ॥

॥ इति राजसूये तृतीयेऽध्याये[5] चतुर्थं खण्डम् ॥

॥ इति तृतीयोऽध्यायः[6] ॥ इति राजसूयः समाप्तः ॥

---

१. B, N हूताय.
२. B, N, CR सद्यन्तजातीयो.
३. B, N, CR अस्म्यहमह.
४. Thus emended; B, N, CR धृतिमाग्निष्टोमे°.
५. B, N omit.
६. B, N इति राजसूये चतुर्थो°

# अश्वमेधः

राजा विजित्याश्वमेधेन यजेत ॥ १ ॥ पुण्यनामधेयं देवयजनमध्यवस्यति ॥ २ ॥ ऋषभस्तूपरः सर्वरूपः ॥ ३ ॥ तेन प्राजापत्येन ॥ ४ ॥ यदत्यायन्त्यो[1] गिरिभिद्[2] आपः[3] परिवहेयुस्तत्र यजेत ॥ ५ ॥ अमावास्यायां ब्रह्मौदनँ श्रपयति ॥ ६ ॥ पूर्वस्यामुत्तरस्यां[3] पर्यग्निं कृत्वा[3] केशश्मश्रु वापयित्वाहतँ वास आछाद्याहवनीये वैतसमिध्ममुपसमाधाय[4] नमस्कारैरादित्यमुपतिष्ठेत[5] । 'द्रष्ट्रे नम उपद्रष्ट्रे नमः ख्यात्रे नमः' इत्युपस्थानान्यधीयते ॥ ७ ॥ हिरण्यगर्भः इत्यष्टौ पूर्णाहुतीर्हुत्वास्तमयमनु[6] वाचँ[6] यछति ॥ ८ ॥ रात्रीँ वाग्यतो भवति ॥ ९ ॥ अपदातीनृत्विजः समानयन्ति ॥ १० ॥ चतुष्टयीष्वप्सु ब्रह्मौदनँ श्रपयति ॥ ११ ॥ तं महर्त्विजः प्राश्नन्ति ॥ १२ ॥ तेभ्यः शतमानं ददाति ॥ १३ ॥ द्वादशारत्निँ[7] रशनां त्रयोदशारत्निँ वा मौञ्जीं दर्भमयीँ वा[7] ब्रह्मौदने पर्यस्ताम् इमामगृभ्णन् इत्यश्वाभिधानीमादाय अभिधा

१. Thus emended; B, N, CR यदत्यामन्तं.

२. Thus emended; cf. ĀpŚS XI. 20.5; B, N, CR गिरिरिदयाप.

३–३. sūtras 6–7 do not convey proper meaning. CR ends sūtra 6 with पूर्वस्याम्. In consideration of MānŚS IX. 2.1.8 and ĀpŚS XX. 1. 5–9 there is a confusion here. Time-sequence of rites is difficult. Sūtra 6 may be regarded as a general statement. Sūtra 7 may give some sense if we read पूर्वां [ पूर्णमासीमुपोष्य ] उत्तराम् [ अमावास्यामिष्ट्वा देवयजनमभिप्रपद्य ] केशश्मश्रु etc.

४. By conjecture; B, N, CR वैतसं कटमुप°

५. Thus N; B, CR नमस्कारैरुप°

६. B, N °स्तमयमनुक्तं.

७–७. B, N द्वादशारत्नी रशना त्रयोदशारत्निर्वा मौंजी दर्भमयी.

असि इत्यश्वमभिनिदधाति कृष्णपिशङ्गं त्रिहायणँ सोमपँ सोमपयोः पुत्रम् ॥ १४ ॥ स्वगा त्वा देवेभ्यः इति ब्रह्माणमामन्त्रयते ॥ १५ ॥ तं बधान देवेभ्यः इति ब्रह्मा प्रत्याह ॥ १६ ॥ शतैः सह प्रोक्षति पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा पश्चाद्धोतोत्तरत उद्गाता । अभिषेक्याणाँ राजपुत्राणाँ शतैः सहाध्वर्यू राज्ञां ब्रह्मा सूतग्रामणीनाँ होता क्षत्तृसंगृहीतॄणामुद्गाता ॥ १७ ॥ प्रजापतये त्वा जुष्टं प्रोक्षामि इति पर्यायैः ॥१८॥ सर्वे पञ्चमेन ॥ १९ ॥ यः पितुरनुजायाः पुत्रः स[1] पुरस्तादश्वं तीर्थाय नयति यो[2] मातुरनुजायाः पुत्रः स पश्चादन्वेति ॥ २० ॥ सैध्रकं मुसलमादाय पौँश्चलेयः पश्चादन्वेति ॥ २१ ॥ अनुनयन्ति श्वानं चतुरक्षम् ॥ २२ ॥ तीर्थान्ते पद्‌तोऽभ्यश्वस्य नयति ॥ २३ ॥ यो अर्वन्तं जिघांसति इति पौँश्चलेयो मुसलेन श्वानँ हन्ति ॥ २४ ॥ परो मर्तः परः श्वा इति श्वानमश्वस्याधस्पदमपप्लावयति ॥ २५ ॥ उत्क्रामन्तमश्वमैषीकेणोदूहेनोदूहति ॥ २६ ॥ वेतसशाखानुबद्धा भवति ॥ २७ ॥ अग्नये स्वाहा इत्यनुवाकमावर्तयन्नश्वं मार्जयत्यश्वस्तोक्याभिः ॥ २८ ॥ विभूर्मात्रा इत्यश्वमवसृजति ॥ २९ ॥ देवा आशापालाः इति परिददाति ॥ ३० ॥ शतं तल्प्या राजपुत्राः कवचिनोऽनिवर्तयन्तोऽश्वँ रक्षन्ति शतँ वैश्यानुपरक्षिणः[3] कृत्वा ॥३१॥ यद्यश्वस्य नाशमाशङ्केत[4] "अग्नये अँहोमुचे" (मै. सं. ३.१५.११) इति मृगारेष्टिमश्वस्याखरे[5] निर्वपति ॥ ३२ ॥ पुरस्तात्स्विष्टकृतो हिंकाराय स्वाहा इत्यनुवाकेनाश्वचरितां जुहोति ॥ ३३ ॥ सावित्रोऽष्टाकपालः पूर्वाह्णे सवित्रे प्रसवित्र एकादशकपालो मध्यंदिने सवित्र आसवित्रे द्वादशकपालोऽपराह्णे ॥ ३४ ॥ सँस्थितासु परिप्लवमाचष्टे होता हिरण्यफलक

१. B, N omit.
२. B, N omit.
३. Thus emended; B, N, CR श्रिदशानुपरिक्षिण.
४. Thus emended; B, N, CR तासां च शंकेत.
५. Thus emended; B, N, CR °मश्वस्यवेरे.

आसीनः ॥३५॥ हिरण्यफलके कशिपुनि वासीनोऽध्वर्युः प्रतिगृणाति । ओम् इत्यृक्षु तथा इति गाथासु ॥ ३६ ॥ परिधानीयाँ संपाद्य ब्राह्मणो वीणागाथी गायति इत्यददाः, इत्ययजथाः, इत्यदः कल्पमकरोत् इति मिश्रास्तिस्रो गाथाः ॥ ३७ ॥ सायं जुहोति इह धृतिः इति पर्यायैः ॥३८॥ राजन्यो वीणागाथी गायति इत्ययुध्यथाः, इत्यमुं संग्राममजयत्, अदो वीर्यमकरोत् इति मिश्रास्तिस्रो गाथाः ॥ ३९ ॥ इष्टिप्रभृति गाथाश्च[1] ॥ ४० ॥ सकृदश्वचरितां जुहोतीति[2] दिवा[2] ब्राह्मणगानं च ॥ ४१ ॥ एकादशे मासि सावित्रं प्रत्युखासंभरणं क्रियेतामावास्यायाः सँवत्सरः[3] ॥ ४२ ॥ तमासमाप्यति ज्यौत्स्नस्य यद्रात्रं त्रिभिः सावित्रमिति जुहोति[4] ॥ ४३ ॥ वीणागाथिभ्याँ शते ददात्यनसी च युक्ते ॥ ४४ ॥ सप्तम्यामसंप्राहत्य[5] अश्वाप्यये[6] वडवाप्यये[6] ॥ ४५ ॥ सप्तम्यां पशुबन्धेनेष्ट्वाष्टम्यां[7] दीक्षते ॥ ४६ ॥ त्रैवातव्या[8] दीक्षणीया ॥ ४७ ॥ समानमा दीक्षाहुतिभ्यः ॥ ४८ ॥ भुञ्जीते[9] चतस्र आध्वरिकीः सप्ताहं जुहोति काय स्वाहा इति चार्धानुवाकस्य मिश्रमिश्रानन्वहं पूर्णाहुतिवर्जम् ॥ ४९ ॥ आध्वरिकीर्हुत्वा आकूतमग्निम् इति षडाग्निकीर्जुहोति शेषं चाश्वमेधिकीनामन्ते पूर्णाहुतीनाम् ॥ ५० ॥ आ ब्रह्मन् इति ब्रह्मैषां[10] प्रवर्त्यमानमनुमन्त्रयते ॥ ५१ ॥ पौर्णमासी प्रथमा दीक्षा-

१. B, N गाथां च.
२. B, N जुहोति इष्टिदेवा; CR जुहोतीष्टिरेव.
३. ? cf. ĀpŚS XX. 8.8
४. ?
५. ?
६. Thus emended; B, N, CR अश्ववायाँ वडवायाँ.
७. Thus emended; cf. MānŚS IX. 2.2.14; B, N, CR पञ्च पशुनेष्ट्वा षष्ठ्यां.
८. B, N, CR त्रैवातव्यानितिरात्रस्य.
९. ? cf. ĀpŚS XX. 8.6.
१०. ? cf. ĀpŚS XX. 8.13; MānŚS IX. 2.2.18.

णामेकादशी वा[1] ॥ ५२ ॥ अपरपक्षस्य चतस्रोऽवाशिष्यन्ते[2] ता उपसदोऽष्टौ च[3] ॥ ५३ ॥ उत्तरस्य पक्षस्य नवमदशमैकादशमिति सौम्यान्यहानि ॥ ५४ ॥ त्रिस्तावा वेदिः ॥ ५५ ॥ एकविँशतिर्यूपाः ॥५६॥ नैतुदारवो[4]ऽग्निष्ठ एकविँशत्यरत्निः पौतुद्रवावभितः ॥५७॥ इतरेषाँ[5] [ षट् खादिरान् ] षट् पालाशान् षड् बैल्वान् संमिनोति यथैकादशिनान् ॥ ५८ ॥ अग्नीषोमीयस्य पशुपुरोडाशमनु " अग्नये गृहपतये " ( मै. सं. २.६.६ ) इत्यष्टौ देवस्वाँ हवीँषि निर्वपति सर्वपृष्ठां च ॥५९॥ " अग्नये गायत्राय " ( मै. सं. ३.१५.१० ) इति दशहविषम् ॥ ६० ॥

॥ इत्यश्वमेधे चतुर्थेऽध्याये[6] प्रथमं खण्डम् ॥

अग्निष्टोमः प्रथमा सँस्था ॥ १ ॥ पत्नीसँयाजान्ते सँस्थितेऽस्तमितेऽन्नानि प्रजुह्वति ॥ २ ॥ यद्यसँस्थितमस्तमिते[7] चेदेकदेशँ सँस्थापयेदेकदेशेऽन्नानि[7] जुहुयात् ॥ ३ ॥ सक्तून्[8] लाजान् धानाः करम्भान् प्रियङ्गुतण्डुलान् मसूस्यानि तण्डुलान् पृथुकान् मध्वाज्यमिति[8] खादिरैः स्रुवैः प्रत्यञ्चं[9] जुहुयात् ॥ ४ ॥ आ ब्रह्मन् इत्यनुवाकेनाज्यँ

१. CR does not break the sūtra here.
२. CR breaks the sutra here.
३. CR does not break the sutra here.
४. Thus emended; B, N नैतुदवो; cf. MānŚS IX. 2.2.22; CR राज्जुदालो.
५. B, N, CR add वा.
६. B, N omit.
७-७. Thus emended; B, N, CR यद्यसँस्थिमत्युभौ चेदेकादशः ( N चेदेकदेशः ) सँस्थापयेदेकदेशोऽन्नानि.
८-८. Thus emended; B, N, CR सक्लाधो जाना कुसुमसर्पिः पयोगडान्मृष्टशान्तिकरणानि पृथुकानि मध्वापमिति. cf. MānŚS IX. 2.2.30; ĀpŚS XX. 10.5.
९. B, N प्रत्यन.

सर्वमितरैः ॥५॥ एकस्मै स्वाहा ॥ द्वाभ्यां स्वाहा इत्यैकोनशतात् ॥६॥ द्वाभ्यां स्वाहा ॥ त्रिभ्यः स्वाहा इत्यैकशतात् ॥७॥ अयुग्भिराज्यं जुह्वति युग्मैरन्नानि ॥८॥ एतेन धर्मेणारभ्य माष्ट्राभ्यो नाष्ट्राभ्य उपक्रमेतानवस्थेदश्वः[१] ॥९॥ दशभ्यः स्वाहा ॥ विंशतये स्वाहा इति दशाभ्यासेना पञ्चाशतः ॥१०॥ पञ्चाशत्प्रभृत्याज्यं जुह्वति पञ्चाशते स्वाहा ॥ शताय स्वाहा ॥ द्वाभ्यां शताभ्यां[२] स्वाहा इति शताभ्यासेना सहस्रात् ॥११॥ सहस्राभ्यासेनायुतात् ॥१२॥ अयुताभ्यासेना प्रयुतात्[३] ॥१३॥ प्रयुताय स्वाहा ॥ नियुताय स्वाहा ॥ अर्बुदाय[४] स्वाहा ॥ समुद्राय स्वाहा[४] ॥ परार्धाय स्वाहा ॥ धेनवत्सते स्वाहा ॥ विवस्वते स्वाहा ॥१४॥ व्युछन्त्यै स्वाहा व्युछन्त्याम् ॥१५॥ व्युष्टयै स्वाहा व्युष्टायाम् ॥१६॥ उदेष्यते स्वाहा उदेष्यति ॥१७॥ उद्यते स्वाहा उद्यति ॥१८॥ उदिताय स्वाहा उदिते ॥१९॥ सर्वस्मै स्वाहा ॥ स्वर्गाय स्वाहा इत्यन्ततो हुत्वातिरिक्तमन्नमश्वाय निदधाति ॥२०॥ उकथ्यः शाक्वरपृष्ठो मध्यममहः ॥२१॥ उपांश्वन्तर्यामयोः पात्रे प्रयुज्य महिम्नोः पात्रे प्रयुनक्ति सौवर्णराजते ॥२२॥ आग्रायणस्थालीं प्रयुज्य प्राजापत्याज्यपात्रं[५] प्रयुनक्ति ॥२३॥ उपांश्वन्तर्यामौ गृहीत्वा महिमानौ गृह्णाति हिरण्यगर्भः इति द्वाभ्याम् ॥२४॥ रुक्मप्रतिहितेनाज्येनाश्वमानयन्ति[६] ॥२५॥

॥ इत्यश्वमेधे चतुर्थेऽध्याये[७] द्वितीयं खण्डम् ॥

---

१ ?

२. B, N omit.

३. Added by conjecture; B, N omit.

४–४. Thus N; CR omit.

५. Thus emended; B, N, CR °ग्यपात्रं.

६. Thus emended; B, N °नाद्येनयमा°; CR °नाद्येन तमा°.

७. B, N omit.

ज्योतिर्यज्ञस्य पवते मधु घृतं पिता देवानां जनिता विभूवसुः ।
तस्यादधातु रत्नं स्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो रसः ॥

इत्यश्वस्य ग्रीवासु रुक्मं प्रतिमुच्य श्येनोऽसि गायत्रम् इति पवमानानुमन्त्रणेनाश्वस्य[1] पुछमन्वारमन्ते[2] ॥१॥ अग्निर्वृत्राणि जङ्घनद् इति पवमानँ यन्त्यास्तावं[3] प्राञ्चः[3] ॥ २ ॥ उद्गातारमपरुणद्धि उद्गातर्निष्केण त्वा शतपलेनापरुणध्मि इति ॥३॥ तमपरुध्यर्त्विजोऽपरुन्धन्ति ॥ ४ ॥ अश्वायोपरुन्धन्ति वडबाः ॥ ५ ॥ संक्रन्दयत्यश्ववडबम् ॥ ६ ॥ अश्वेनास्तावमाक्रमयन्ति ॥ ७ ॥ अश्वाक्रान्त आर्चिष्यानुपयछन्ति[4] ॥ ८ ॥ उद्गातारमुपह्वयते उद्गातर्निष्केण त्वा शतपलेनोपह्वयामीमां देवतामुद्गायन्तीमनूद्गाय इति ॥ ९ ॥ स्तुते शतमानमुद्गातृभ्यो[5] ददाति ॥ १० ॥ सोपशयान् यूपान्[6] संमीय[6] पशूनुपाकरोति ॥ ११ ॥ अश्वस्तूपरो गोमृगस्ते प्राजापत्या अग्निष्ठे ॥ १२ ॥ " कृष्णग्रीव आग्नेयो ललाटे " ( मै. सं. ३.१३.२ ) इत्यश्वे पर्यङ्ग्याः ॥ १३ ॥ सौर्ययामौ श्वेतश्च कृष्णश्च पार्श्वयोः ॥ १४ ॥ सौर्यं[6] श्वेतमुत्तरतो यामं कृष्णं दक्षिणतः ॥ १५ ॥ " वायव्यः श्वेतः पुछा इन्द्राय स्वपस्याय वेहद्वैष्णवः " ( मै. सं. ३.१३.२ ) इति ॥ १६ ॥ " बभ्रुररुणबभ्रुः " ( मै. सं. ३.१३.३–१६ ) इत्यनुवाकैर्यथादेवतमुपाकरोति जानपदीभिः संज्ञाभिः प्रथितान्[7] । वत्सतर्य[8] इति समान्तरान्[9] वष्किहा इति

१. B, N °मंत्रयतेनाना.
२. B, N °रभेते.
३. B, N यंत्यास्तायं भाश्यो.
४. ?
५. N °मुद्गात्रेभ्यो; CR °मुद्गात्रे.
६. B यूपानुपसमाय; N यूपानुसमाय.
७. Thus emended; B, N, CR प्रतिपशौवा.
८. B, N, CR वत्सवस्या.
९. ?

वाकैनांपुँ[१] सँसृष्टा इति वैकथितामुत्सृष्टाः[२] ॥ १७ ॥ त्र्यवयः इत्य-र्धहायनान्[३] दित्यवाहः इति द्विहायनान्[४] यँवाहयति भ्रापराग्न्यन्यय[५] इति त्रिहायणान्[६] तुर्यवाहः इति चतुर्हायनान्[७] ॥ १८ ॥ पष्ठवाहः इति पञ्चवर्षान्[८] ॥ १९ ॥ "धूम्रा वसन्ताय" (मै. सं. ३.१३.१९–२०) इत्यनुवाकाभ्यामन्वहं पशुबन्धैरिष्ट्वा सोमानामाहरेत[९] ॥२०॥ "वसन्ताय कपिञ्जलान्" (मै. सं. ३.१४.१–२१) इत्येकविँशत्यनुवाकैरारण्यानुपाकरोति[१०] ॥ २१ ॥ कुम्भेषु पन्नगान् जालेषु[११] पक्षिणः कारासु[११] हस्तिनः पञ्जरेषु नखिनो दँष्ट्रिणश्च ॥ २२ ॥ यूपेषु[१२] ग्राम्यान् पशून् नियुनक्त्यन्तरालेष्वारण्यान् धारयन्ति ॥ २३ ॥ वेतसशाखया प्राजापत्यानुपाकरोति प्लक्षशाखाग्रेणेतरान् ॥ २४ ॥ युञ्जन्ति ब्रध्नम् इत्यश्वँ युनक्ति ॥२५॥ युञ्जन्त्यस्य काम्या इति रथँ युनक्ति[१३] ॥ २६ ॥ केतुं कृण्वन् इति ध्वजमुपकर्षति ॥ २७ ॥ जीमूतस्येव इति वर्माभ्यूहति[१४] ॥ २८ ॥ धन्वना गाः इति धनुरादत्ते ॥ २९ ॥ वक्ष्यन्तीव इति ज्याम-

१. ?
२. ?
३. B, N, CR °हायना.
४. N द्विहायना; B, CR द्विहायना.
५. ? cf. MānŚS IX. 2.3.18.
६. N त्रिहायना; B, CR त्रिहायना. cf. III. 4.1.14; CR breaks the sūtra here.
७. N चतुर्हायना; B, CR चतुर्हायनाः
८. B, N, CR पञ्चवर्षाः
९. ?
१०. CR reads sūtras 21–22 as a single sūtra.
११–११. Thus emended. cf. MānŚS IX. 2.4.4; B, N, CR औषजलजटासु.
१२. B, N यूपो.
१३. B, N read sūtras 26–42 at the beginning of the 5 khaṇḍa.
१४. B वर्माभ्यूहति; N वर्माभ्यूहति.

भिमन्त्रयते ॥ ३० ॥ ते आचरन्ती इति धन्वार्त्नीम्[1] ॥ ३१ ॥ बह्वीनां पिता इतीषुधिम् ॥ ३२ ॥ रथे तिष्ठन् इति सारथिम् ॥ ३३ ॥ तीव्रान् घोषान् इत्यश्वान् ॥ ३४ ॥ वनस्पते वीड्वङ्गः इत्यारोहति ॥ ३५ ॥ स्वादुषंसदः इत्यारुह्य जपति ॥ ३६ ॥ अहिरिव इति तलं बद्ध्वा जपति ॥ ३७ ॥ कशामादाय[2] अवोसि सप्तिरसि इत्यश्वान् संक्षिपति ॥ ३८ ॥ उपश्वासय[3] इति [ द्वाभ्यां ][3] दुन्दुभीनाघ्नन्ति ॥ ३९ ॥ आमूरज [ इति जपति ] ॥ ४० ॥ यद्वातोऽपः इत्यश्वे-नापोऽवगाहेत ॥४१॥ एतं स्तोतः इत्यावर्तयति ॥४२॥ वि ते मुञ्चामि इति विमुञ्चति ॥ ४३ ॥ पत्न्योऽभ्यञ्जन्ति । वसवस्त्वाञ्जन्तु इति कासाम्बवेन महिषी । रुद्रास्त्वाञ्जन्तु इति गौल्गुलवेन वावाता । आदित्यास्त्वाञ्जन्तु इति मौस्तफाण्टेन[4] परिवृक्ती ॥ ४४ ॥ त्रिसहस्रं मणीन् लोमस्ववयवेषु[5] ग्रथ्नन्ति ॥ ४५ ॥ भूः इति हरितान् महिष्यभिषेकार्ह-राजपुत्राणां दुहितृशतेन सह ॥ ४६ ॥ भुवः[6] इति राजतान् वावाता राज्ञां दुहितृशतेन सह ॥ ४७ ॥ स्वः इति शङ्खमयान् परिवृक्ती सूत-ग्रामणीनां दुहितृशतेन सह ॥ ४८ ॥ लाजी शाची[7] इत्यश्वेनान्न-माशयन्ति[7] ॥ ४९ ॥ होता च ब्रह्मा च ब्रह्मोद्यं वदतः । दक्षिणत आहवनीयस्य ब्रह्मोत्तरतो होता ॥ ५० ॥ कः स्विदेकाकी चरति इति पृच्छति । सूर्य एकाकी चरति इति प्रत्याह ॥ ५१ ॥

॥ इत्यश्वमेधे चतुर्थेऽध्याये[8] तृतीयं खण्डम् ॥

१. Thus emended; cf. III. 3.3.5; B, N, CR धनोरार्त्नी.
२. B, N मादाय.
३. Thus emended; cf. MānŚS IX. 2.3.19; N अश्वामयेति; CR आश्वासयति ॥ ३९ ॥ दुन्दुभीनाघ्नन्त्यामूरजेति ॥ ४० ॥
४. N मोस्तुफादेन; B मोम्तुफादेन; CR मौस्तफाटेन.
५. B, N लोममश्वाचयमय
६. N interchanges sūtras 47 and 48.
७. Thus emended; cf. MānŚS IX. 2.3.25; B, N, CR लाम्यस्त्वेस्वेनातमापयति. ८. B, N omit.

पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम् ।
पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥

इति ॥ १ ॥

इयँ वेदिः परो अन्तः पृथिव्या अयँ यज्ञो भुवनस्य नाभिः ।
अयँ सोमो वृष्णो अश्वस्य रेतो ब्रह्मायँ वाचः परमं व्योम ॥

इति प्रत्याह ॥ २ ॥ का स्विदासीत् पूर्वचित्तिः इति पृच्छति ॥ ३ ॥ द्यौरासीत् पूर्वचित्तिः इति प्रत्याह ॥ ४ ॥ अन्यतरः पृच्छत्यन्यतरः प्रत्याह ॥ ५ ॥ समानमोपपायनात् ॥ ६ ॥ यद्यश्वो न पिबेत्तं ब्रूयाद्

अग्निः पशुरासीत् । तमालभन्त । तेनायजन्त । स इमं लोकमजयद्यस्मिन्नग्निः । स ते लोको भविष्यति यदि पास्यसि । तस्मात्त्वान्तरेष्यामि यदि न पास्यसि ॥

वायुः पशुरासीत् । तमालभन्त । तेनायजन्त । सोऽन्तरिक्षलोकमजयद्यस्मिन् वायुः । स ते लोको भविष्यति यदि पास्यसि । तस्मात्त्वान्तरेष्यामि यदि न पास्यसि ॥

आदित्यः पशुरासीत् । तमालभन्त । तेनायजन्त । सोऽमुं लोकमजयद्यस्मिन्नादित्यः । स ते लोको भविष्यति यदि पास्यसि । तस्मात्त्वान्तरेष्यामि यदि न पास्यसि ॥

इति ॥ ७ ॥ पर्यग्निकृतानुत्सृजन्त्यारण्यान् ग्राम्यांश्च पुरुषांश्च ॥ ८ ॥ शामित्रायाश्वस्य नीयमानस्य पौष्णमजमग्रतो नयन्ति ॥ ९ ॥ अधस्ताद्दर्भमवास्यति[1] वासो हिरण्यँ[2] रुक्ममिति ॥ १० ॥ तार्प्येणाश्वँ[2] संज्ञपयन्ति श्यामूलेन वा ॥ ११ ॥ स्पन्द्याभिरितरान्[3] ॥ १२ ॥ प्राणाय स्वाहा इति संज्ञप्यमानेषु जुहोति ॥ १३ ॥ अम्ब्यम्बिके इति महिषीं पत्न्य उदानयन्ति ॥ १४ ॥ सव्यान् ग्रन्थीन्[4] कृत्वा नवकृत्वः पशून् प्रसव्यं परियन्ति गणानां त्वा गणपतिँ हवामहे इति पर्यायैः ।

1. Thus N; CR °मास्यति.
२–२. N हिरण्यरुक्मिमपव तार्प्येण; CR हिरण्यरुक्मे तार्प्येणाश्वँ.
३. N स्वत्याभिरितरान्; CR स्पन्द्यये°.
४. B, N, CR ग्रन्थान्.

वसो मम इत्यनुषजति ॥१५॥ आहमजानि इति महिष्यनुपरिविशति[1] ॥ १६ ॥ तौ सह इति पादान् प्रसारयन् स्वर्गे लोके प्रोर्णुवाताम् इत्यहतेन वाससा पादतोदशेन प्रछाद्य वृषा वामश्वः इति सँहितप्रजननयोः पत्नी″ यजमानोऽनुमन्त्रयते ॥१७॥ ऊर्ध्वामेनामुच्छ्रापय इति महिषीं पत्न्य उदानयन्ति ॥ १८ ॥ गायत्री त्रिष्टुप् इति पर्यायैः सूचीभिरसिपथान् कल्पयन्ति द्वाभ्यां द्वाभ्यामेकैका । हरिणीभिर्महिषी राजतीभिर्वावाता लोहमयीभिः परिवृक्त्यसँलोभनाय[2] शल्मलीपिष्टैरवलिप्य[2] ॥ १९ ॥ वपाभिः प्रचरन्ति सह प्राजापत्यानाँ सहेतरेषाम् ॥ २० ॥ नाश्वस्य वपा भवति ॥ २१ ॥ चन्द्रं नाम मेदः । तदस्य वपास्थाने ॥ २२ ॥ प्रजापतये हयस्य छागस्य गोमृगस्य चन्द्रवपानां मेदसः इति प्राजापत्यानाँ संप्रैषः । विश्वेभ्यो देवेभ्यश्छागानामुष्ट्राणां मेषाणां वपानां मेदसः इतीतरेषाम् ॥ २३ ॥ अभितो वपा महिमानौ जुहोति ॥ २४ ॥ हुत्वा परिवप्यौ परिवप्यमहिमभ्याँ[3] सूकरविकर्तमश्वं निकृन्तति ॥२५॥ तस्य पवमानौ″ लोहितँ श्रपयति ॥ २६ ॥ दक्षिणाकाले काममात्रा दक्षिणा ददाति ॥ २७ ॥ यदि कामानापयेद्दिक्ष्वब्राह्मणानामन्नं[5] दद्याद्भूमिपुरुषवर्जम् । प्राच्यां दिश्यध्वर्यवे दक्षिणस्यां ब्रह्मणे प्रतीच्याँ होत्र उदीच्यामुद्गात्रे ॥ २८ ॥

॥ इत्यश्वमेधे चतुर्थेऽध्याये[6] चतुर्थं खण्डम् ॥

---

१. Thus emended; B, N, CR °विष्यति; CR suggested उपसँविशति, cf. Caland "On the relative chronology of some ritualistic Sūtras" *Acta Orientalia* IX pp. 69–76, Lugduni Batavorum, 1931.

२. Thus emended; B, N, CR °संलभमानायाशाल्मी°.

३. Thus emended; B, N, CR परिवाप्यमानाभ्यां.

४. !

५. Thus emended; B, N, CR °येदिक्षुष्टं ब्राह्मणा°.

६. B, N omit.

.........[1] प्रत्यावर्तयति ॥ २ ॥ प्राञ्चँ[2] सिँहचर्मण्यभिषिञ्चन्ति ॥ ३ ॥ ऋषभचर्माण्यधि धारयन्ति ॥ ४ ॥ सहस्रशीर्षा पुरुषः इति शतकृष्णलँ रुक्मँ शतातृण्णमुपरिष्टाद्दधाति ॥ ५ ॥ हिरण्यगर्भः इति पूर्वासाँ सप्तानां प्रथमानां पुरस्ताद् अपानभृतः इत्युपरिष्टात् ॥ ६ ॥ मासनामानि हुत्वाप्रीभिर्हस्तं[3] गृह्णाति ॥ ७ ॥ जागतान् विष्णुक्रमान् क्रामति ॥ ८ ॥ प्राजापत्यं चरुशेषं पालाशपात्रेष्वासिच्य मध्यतः-कारिणोऽभिषिञ्चन्ति ॥ ९ ॥ वि रक्षो वि मृधो जहि इति मुखँ विमृष्टे ॥ १० ॥ प्रचरणकाल उत्तरत आहवनीयस्य वैतसे कटेऽश्वस्यावद्यति तैजने दक्षिणतोऽन्येषां पशूनाम् ॥ ११ ॥ पुरस्तादाहवनीयँ[4] वैतसं कटमास्तीर्य तस्मिन् प्राजापत्यान् संचिनोति प्राञ्चमश्वं प्राञ्चं तूपरं प्रत्यञ्चं गोमृगमिति ॥ १२ ॥ शादं दद्भिः स्वाहा ॥ अवकान् दन्तमूलैः स्वाहा इति पर्यायैः द्यावापृथिवी वर्तोभ्याम् इत्येतस्य पुरस्तादरण्येऽनुवाक्येन गणेन जुहोत्युदुहय जुम्बकम्[5] ॥ १३ ॥ पूषणं वनिष्ठुना ॥ मा नो मित्रः ॥ समिद्धो अञ्जन् इति त्रिभिरनुवाकैराहुतीर्जुहोति ॥ १४ ॥ द्विपदाभिरन्ततो हुत्वा स्विष्टकृतं प्रत्यश्वलोहितं जुहोति अग्नये स्विष्टकृते

---

१. B, N read at the beginning III. 4.3.26–42. The khaṇḍa should indeed begin with one or two sūtras such as माहेन्द्रं गृहीत्वा स्तोत्रमुपाकरोति MānŚS IX 2.5.4 cf. also ĀpŚS XX. 19.11. प्रत्यावर्तयति is related to the last word of III. 4.3.42. CR reads the portion upto sūtra 7 as a single sūtra and numbers it as 5.

२. Thus emended; B, N, CR प्रात्यँ.

३. Thus emended; B, N, CR हुत्वा प्रातर्हस्तं.

४. Thus emended; B, N पुरस्तात् स्विष्टकृत इति आहवनीये; CR पुरस्तादाहवनीये.

५. Thus emended; B, N, CR जुहोत्युदुह्य जांबुकम्. CR breaks the sūtra after जुहोति.

स्वाहा इति गोमृगकण्ठेनाश्वशफेन च[१] ॥ १५ ॥ सर्वस्तोमोऽतिरात्र उत्तममहः ॥ १६ ॥ ऐकादशिनानालभते ॥ १७ ॥ समानमावभृथात् ॥ १८ ॥ आवभृथके कर्मणि कृते शुक्लस्य खलतेर्विक्लिधस्य पिङ्गाक्षस्य[२] तिलकावलस्यावभृथमवसृप्तस्य[२] मूर्धनि जुहोति जुम्बकाय[३] स्वाहा ॥ ब्रह्महत्यायै स्वाहा इति ॥ १९ ॥ नव सौरीर्वशाः श्वेता अनुबन्ध्याः ॥ २० ॥ तासाँ वपासु हूयमानासु प्रतिवातं पापकृतस्तिष्ठेताध्वर्युः पापान्मुच्यते ॥ २१ ॥ पापाद्वासवपार्श्वं[४] सत्वाप्ल[४] तस्मिन् त्वाष्ट्रान्[५] साण्डं[५] किकिदीविं[६] विदीगयमित्युपाकरोति[६] ॥ २२ ॥ उदवसानीये[७] सँस्थिते पशुबन्धेन यजते ॥ २३ ॥ त्रिशाखो यूपोऽष्टाश्रयः शाखाः[८] पृथुकपालानि[८] तन्त्रँ[९] स्वरुमुपगूहति[९] ॥ २४ ॥ त्रैतानां[१०] प्रथमः कालकामुस्तं[११] मध्यमे त्रिशाखयूप[१२] आश्विनमालभेत ॥ २५ ॥ यो[१३] द्वितीयस्तं[१३] भौमं दक्षिणार्ध्ये[१४] ॥२६॥ यस्तृतीयस्तमुत्तरार्ध्ये[१५] ॥२७॥

१. Thus emended; B, N, CR चरुणा.

२. Thus emended; cf. ĀpŚS XX. 22.6; B, N, CR पिङ्गाक्षजटिलाभिवस्यावभृथ°.

३. Thus emended, cf. MS III. 15.8; B, N, CR जम्बुकाय.

४. ? cf. ĀpŚS XX. 22.13.

५. Thus emended; B, N, CR साण्डं त्वाष्ट्रँ.

६. Thus emended; cf. ĀpŚS XX. 22.13; B, N, CR सकिकिदीविविदी°.

७. Thus emended; B, N, CR सोदवसानीये ( CR °सनीये ).

८. B, N, CR शाखापृथ°.

९. Thus emended B, N, CR स्वरुपहरति.

१०. B, N, CR त्वैतानां°

११. Thus emended; B, N, CR कालकमेविन्नुस्तं.

१२. B, N, CR विशाख°.

१३. By conjecture; B, N, CR तयोर्द्वि°; Caland suggested तयोर्यो द्वि.° *AO* IX p. 73.

१४. B, N, CR दक्षिणार्धे.

१५. B, N, CR उत्तरार्धे.

पशूनां पुरोडाशाननु[१] मृगारेष्टिं निर्वपति ॥ २८ ॥ सहस्विष्टकृदिडं मृगारेष्टिपशुपुरोडाशानां च ॥ २९ ॥ तस्मिन् सँस्थिते द्वादश ब्रह्मौदनान् श्रपयति ॥ ३० ॥ तान् महर्त्विजः प्राश्नन्ति ॥ ३१ ॥ तेभ्यो द्वादश द्वादश रुक्मान् ददाति ॥ ३२ ॥ संतिष्ठतेऽश्वमेधः ॥ ३३ ॥ तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्याँ योऽश्वमेधेन यजते यश्चैव देविकाप्रभृतिभिरिष्टिभिर्यजते यजते[२] ॥ ३४ ॥

॥ इत्यश्वमेधे चतुर्थेऽध्याये[३] पञ्चमं खण्डम् ॥

॥ इति चतुर्थोऽध्यायः[४] ॥

१. Thus N; CR पुरोडाशमनु.

२. B, N अध्यायसमाप्तौ द्विरभ्यासः श्रौतो वाचार्यः

३. B, N, omit.

४. B, N पंचमोध्यायः

# Index of Mantras

All Mantras, whether metrical or prose, the calls to priests and others, and other utterances have been recorded. Besides the VārŚS reference, reference or references to such texts have been given as are supposed to have been the direct source of VārŚS. If any Mantra is identical with that in both the MānŚS and the ĀpŚS, the MānŚS reference alone is given. Even if the direct source be ĀpŚS, the reference, if any, to TS or TBr has also been recorded. In a few cases there may be minor difference between the VārŚS-mantra and that in other sources.

* * *

# Index of words

Words from all kinds of mantras and words occurring commonly are not recorded. Corrupt words have been omitted.

# शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | १९ | ०मश्नीदारण्य० | ०मश्नीयादारण्य० |
| ३४ | १५ | समार्ष्टि | संमार्ष्टि |
| ९१ | ९ | ०ामयन्ति | ०भियन्ति |
| ९३ | ५ | तूष्णीमुर्खी | तूष्णीमुखी |
| ११५ | ११ | देवाः । | देवाः ॥ |
| ११९ | १८ | ०मन्द्रँ | ०मैन्द्रँ |
| १४२ | १५ | ाञ्च० | प्राञ्च० |
| १४७ | १ | आश्विन | आश्विनं |
| १५३ | १३-१४ | भुवद्द्भ्यः " ( मै. सं. ४.३.१ ) इति घृते चरुः ॥ १३ ॥ पञ्चाग्रायणे षष्ठ्यै | भुवद्द्भ्यो घृते चरुः " ( मै. सं २.६.१) इति पञ्च ॥ १३ ॥ आग्रयणः षष्ठी |
| १५४ | २ | प्रतिदिशं | प्रतिदिशं[१] |
| १५४ | १० | ऐन्द्राग्न | इन्द्रासोमीय |
| १५५ | १० | स्वयमावपनम् | स्वयमवपनम् |
| १५६ | १ | देवस्वो | देवस्वौ |
| १५६ | १८ | वर्षंति | वर्षन्ति |
| १५७ | ८ | इत्य ो | इत्यपो |
| १५९ | ९ | तदेव | तवेव |
| १६६ | १४ | प्रियङ्ग० | प्रियङ्गु० |